TRIVANDRUM SANSKRIT SERIES
No. CXXX.
Śrī Citrodayamañjarī,
No. XIX.

# THE
# MAHĀNAYAPRAKĀŚA

EDITED BY
K. SĀMBAŚIVA ŚĀSTRĪ
*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF
HIS HIGHNESS THE MAHARAJA OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,
1937.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १३०.

श्रीचित्रोदयमञ्जरी ।

ग्रन्थाङ्कः १९.

---

# महानयप्रकाशः ।

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधितः ।

---

स च

अनन्तशयने

महामहिमश्रीचित्रावतारमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितः ।

---

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजनिस्तथा सहजया लक्ष्म्या च सम्भावितः।
स्वातिज्योतिरिवादितः समुदितश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः ॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्याद्यलङ्कारिणी
श्रीमद्वञ्चिवसुन्धरानत्रयशोराशिप्रकाशात्मिका।
उत्फुल्लत्सुकृतिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
श्रीचित्रोदयमञ्जरी सुमनसां सर्वस्वमुज्जृम्भताम् ॥

के. साम्बशिवशास्त्री.

# INTRODUCTION.

This Mahānayaprakāśa is a rare work dealing with the principles of the Śākteya system of philosophy. This work rightly deserves the name Mahānayaprakāśa, as it elucidates in a clear and logical manner, the paths leading to the realisation of Mahāśakti (the great Goddess of Power) Who pervades and preserves the universe. The author himself proclaims at the opening of the work, that this Mahānaya, embracing all the other systems of thought is worthy of being studied —

"कुलकौलादिकाम्नायशाक्तत्रिकमतादिषु ।
सरहस्यप्रपञ्चेषु स्वरूपस्थितिहेतुषु ॥
सिद्धान्ततन्त्रभेदेषु नान्योपायात्मकेषु तु ।
स्थितेष्वपि च सोल्लेखो व्यापको हि महानय ॥"

(पृ ४, श्लो १०, ११)

| | |
|---|---|
| अपटटङ्कमयप्रतिष्ठाम् | (पृ १ श्लो. १) |
| अपटाटङ्कता सेय | (पृ १६ श्लो ८२) |
| यत्रापटे परिक्षीणोऽपि टङ्कोऽसौ नयस्तत | (पृ० १९ श्लो० १०९) |
| अपटाटङ्कसङ्केतात् | (पृ० ४०, श्लो० १३६) |
| अपटाटङ्कसङ्केतात् | (पृ ४१ श्लो० १३०) |

From the above references I consider that the principles of this school with Apaṭāṭanka as its very cream of life are intended for the revelation of the true nature of the great Goddess, existing as if unsculptured and unchiselled on the screen and manifesting as the inspiring agency of the evolution and involution of the universe by Her Divine Intelligence.

The essence of the whole work is epitomised by the author himself in the following verse,

"आद्यो व्योमेश्वरीसन्द्ररूपो विश्वोदयोन्मुख ।
अन्यो रौद्रेश्वरीस्फारमयो विश्वविलापक ॥"

(पृ० ४३ श्लो० १७७)

The work contains 9 chapters (Ullāsas) with about 600 Kārikās in total. The first chapter discusses how it is differentiated from the other schools of philosophy and the second about Pīṭhasvarūpa. The remaining 7 chapters deal with Vyomeśvarī, Prakāśa, Ānanda, Mūrti, Bindu, Sṛṣṭi and Anākhya cakrās. This is given in kārikās 3 to 9 of the 7th Ullāsa.

Thus this school is glorified in establishing as it does, by authority and reason, the supreme prominence of Mahāśakti, that is beginningless and indivisible

It is seen from the colophons that the name of the work is Mahanayaprakāśa,

'इति महानयप्रकाशे सर्वंवल्क्षण्यप्रतिपादनो नाम प्रथमोल्लास "

This is affirmed by the words of the author himself in the following stanza,

'महानयप्रकाशोऽस्मिन् ये पूर्वापरवेदिन ।
हस्तामलकवत् तेषां वस्तुतत्त्व प्रकाशते ॥'

(पृ० १७ का० १४)

But some scholars are of opinion that its name is Mahārthaprakāśa, and they may find the following in support of this view —

'महानयक्रमे पूर्वं महाशब्दोऽर्थयुक्तिभाक् ।'

(पृ० ४ श्लो० २१)

*Author* It is understood from hearsay evidence that the author of this work was the great scholar and poet Śri Abhinavaguptacarya There is further evidence in support of this view in the last Karika of the manuscript,

'एतदर्थानुसारेण स्तोत्रभट्टारके मया ।'

The author of Stōtrabhattāraka mentioned herein must be the author of this work is well But Stotrabhaṭṭāraka is attributed to Abhinavaguptacarya by scholars

In the introduction to Tantrasara of Kashmir Granthamālā, the editor Mahāmahopādhyaya Mukundarama Śāstri speaks of ten other works connected with the manuscript of the Tantrasara and quotes a stanza of the transcriber, one Krṣnasvami in which he mentions about one Mahānayaprakāśa, a treatise on Tantra

The verse is quoted below,

महानयप्रकाशोऽय लिखित कृष्णस्वामिना ।
स्वात्मार्थं साधकार्थं च महार्थस्य प्रकाशक ॥'

If the Mahānayaprakāśa mentioned is the same as the one before us, it is only right to have it included in the list of works of Abhinavaguptacārya. The Mahānayaprakaśa that has been published in the Kashmir Granthamālā though correlated in subject matter is quite different from the one before us, as the former consists of Karikās in the vernacular

with elucidative commentaries in Sanskrit. And the author Śrī Śitikanṭhacārya is as well different.

Śrīmad Abhinavaguptacārya to whom this work has *been attributed was a native of Kashmir, residing at Pravara*pura,* and a great authority among the founders of the Śivādvaita School His name is well known as the author of Tantrāloka etc But he is not confined to Tantra and Mantra alone in which he was proficient enough He was a great critic as well as an authority on the science of literature and histrionics Works like Dhvanyālokalocana, Nāṭyavedavivṛti etc., do proclaim his mastery over these arts

The date of this great Ācārya has been proved to be the latter half of the 10th century and the first quarter of the 11th century A D So it is unnecessary to reiterate all the arguments here

Many are known as his teachers He himself makes mention of them in his introductory verses to the Mālinīvārtika —

"गुरुभ्योऽपि गरीयांसं युक्तं श्रीचुखलकाभिधम् ।
वन्दे यत्कृतसंस्कारः स्थितोऽस्मि गलितग्रहः ॥
ततो गुरुतरः श्रीमान् भूतिराजो महामतिः ।
जयताद् भक्तजनतासमुद्धरणसाहसः ॥
श्रीसोमानन्दसम्बोधश्रीमदुत्पलनिःसृताः ।
जयन्ति संविदामोदसन्दर्भा दिक्प्रसर्पिणः ॥
तद्दर्पिसस्रुतिकण्ठेद्विप्रत्यभिज्ञोपदेशिनः ।
श्रीमल्लक्ष्मणगुप्तस्य गुरोर्विजयते वचः ॥

The manuscript on which this publication is based belongs to Brahmaśrī Nārāyaṇan Bhaṭṭatirippad of Paramburillam, Thiruvalla and is about 4 centuries old It is almost worn out and is written in Malayalam script Even though the work is almost complete in view of the subject matter, the manuscript seems to have lost the concluding portion In expressing my respectful indebtedness to the generous owner of the manuscript, I deem myself fortunate in placing the work before the enlightened public

Trivandrum,
24 9 1112

K. SĀMBAŚIVA ŚĀSTRI.

---

* प्रवरपुरनामधेये पुरे पूर्वं काश्मीरिकोऽभिनवगुप्तः मालिन्यादिमवाक्यवार्तिकमेतद् रचयति स्म ।

(मालिनीवार्तिकम्)

॥ श्रीः ॥

# निवेदना।

महानयप्रकाशोऽयं कोऽप्यपूर्वः शाक्तेयसिद्धान्तनिरूपणपरो ग्रन्थः। अपटटङ्कमयप्रतिष्ठाया देव्याः प्रसादेन महार्थचक्रक्रमसम्प्रदायो युक्त्यात्मना महानयेनानेन प्रकाश्यत इति नामधेयमस्यान्वर्थं महानयप्रकाश इति। अन्येषां सर्वेषां प्रक्रियाभेदानां व्यापकोऽयं महानयोऽवश्यविज्ञेय इति ग्रन्थकारेणैव विस्पष्टमुच्यते।

यथा —

"कुलकौलादिकाम्नायशाक्तत्रिकमतादिषु।
सरहस्यप्रपञ्चेषु स्वरूपस्थितिहेतुषु॥
सिद्धान्ततन्त्रभेदेषु नान्योपायात्मकेषु च।
स्थितेष्वपि च सोल्लेखो व्यापको हि महानयः॥"

(पृ० ४. श्लो० १०, ११.)

इति।

| | |
|---|---|
| अपटटङ्कमयप्रतिष्ठाम् | (पृ० १. श्लो० १.) |
| अपटाटङ्कता सेयं | (पृ० १६. श्लो० ८२.) |
| यत्रापटे परिक्षीणोऽपि<br>टङ्कोऽसौ नयस्ततः | (पृ० १९. श्लो० १०९.) |
| अपटाटङ्कसङ्केतात् | (पृ० ४०. श्लो० १३८.) |
| अपटाटङ्कसङ्केतात् | (पृ० ४२. श्लो० १६०.) |

इति बहुशोऽपटाटङ्कजीवातोरस्य सिद्धान्तस्य कथनं मन्ये स्वसंवित्प्रकाशस्य विश्वस्य स्वप्रकाशायोदयलयावास्पदीकृत्य बाढं पटेऽवलम्बेऽटङ्कनमरेखणमचित्रणमात्मस्वरूपं देव्या निगमयत्ययं नयविमर्शः। ग्रन्थकारश्चैवं तमिमं संगृह्णाति —

"आद्यो व्योमेश्वरीस्पन्दरूपो विश्वोदयोन्मुखः।
अन्यो रौद्रेश्वरीस्फारमयो विश्वविलापकः॥"

(पृ० ४१. श्लो० १७७.)

इति।

नवभिरुल्लासैः सम्पुटितो मार्की कारिकाणां शतकषट्केन कृताकृतिरयं प्रकाशस्तत्राद्याभ्यां सर्वमतवैलक्षण्य पीठस्वरूपे, अन्यैश्च सप्तभि. व्योमेश्वरी-प्रकाशानन्द मूर्ति वृन्द सृष्ट्यनाख्यचक्राणि च निरूपयति । तदिदं सप्तमोल्लासादौ ३ — ९ कारिकाभिः सूत्रत उट्टङ्क्यते । एवं सममार्ग सोपपत्ति चानाद्यविच्छिन्नं शक्तिप्राधान्य साधयन्नय नय सुतरां प्रशस्यते ।

ग्रन्थनाम । "इति श्रीमहानयप्रकाशे सर्ववैलक्षण्यप्रतिपादनो नाम प्रथमोल्लास" इत्यादितत्तदुल्लासपरिसमाप्तिवाक्यैः,

' महानयप्रकाशेऽस्मिन् ये पूर्वापरवेदिन ।
हस्तामलकवत् तेषां वस्तुतत्त्वं प्रकाशत ॥"

(पृ० २७. श्लो० २४.)

इति ग्रन्थकारवचनेन च महानयप्रकाश इति ग्रन्थनाम ज्ञायते। महार्थप्रकाश इत्यपि केचनाचक्षते। तेषां,

"महानयक्रमे पूर्व महाशब्दोऽर्थयुक्तिभाक् ।"

(पृ० ४. श्लो० २९.)

इति वचनमनुकूलं भवति ।

ग्रन्थकारश्च सुप्रसिद्धो बहुशास्त्रपण्डितो बहुप्रबन्धप्रणेता च श्री महामहेश्वराचार्यवर्यश्रीमदभिनवगुप्ताचार्य इति कर्णाकर्णिकया श्रूयते । अस्ति च किमप्यव्यभिचरितं लिङ्गं, यदिहोपलब्धग्रन्थान्तिमकारिकायाम् —

"एतदर्थानुसारेण स्तोत्रभट्टारके मया ।"

इति श्रीमदभिनवगुप्ताचार्यस्य कृतिः स्तोत्रभट्टारको नाम काचित् स्वकृतत्वेनाभ्युपगम्यते । स्तोत्रभट्टारकश्चाभिनवगुप्ताचार्यकृतिरित्यभियुक्ताः । काश्मीरीयग्रन्थमालान्तर्गतस्य तन्त्रसारस्योपोद्घाते प्रमाधकेन महामहोपाध्याय-पण्डितमुकुन्दरामशास्त्रिणा दशापरानपि ग्रन्थान् प्रकृततन्त्रसारमातृकाघटितान् पश्यता तत्रत्यं लेखककृष्णस्वामीयश्लोकमधोलिखितं प्रदर्शयता च महानयप्रकाशोऽपि कश्चन तत्र मिलितः स्वीक्रियते । अयं च स श्लोकः —

"महानयप्रकाशोऽयं चिन्तितं कृष्णस्वामिना ।
स्वात्मार्थं सार्थमार्थं च महार्थस्य प्रकाशकः ॥"

इति ।

यद्ययं महानयप्रकाशः प्रकृत एव स्यात् स्थाने, स श्रीमदभिनवगुप्ताचार्यग्रन्थमातृकायां प्रवेशितस्तुल्यप्रसरः। अन्यश्च महानयप्रकाशो यः काश्मीरीयग्रन्थमालायां प्रासाधि स मनागिव प्रमेयसाम्येऽपि संस्कृतव्याख्योपबृंहितभाषामयकारिकात्मा सुदृढमन्य एव। कर्ता च तस्य श्रीमन्महेश्वराचार्यश्रीशितिकण्ठाचार्योऽप्यन्य एव। अस्य च महानयप्रकाशस्याभ्यूह्यमानः कर्ता श्रीमन्महामहेश्वराचार्यवर्यः श्रीमदभिनवगुप्ताचार्यः *प्रवरपुरवासी काश्मीरिकः कश्चन शिवाद्वैतमतप्रतिष्ठापकेषु परमं प्रमाणप्रकाण्डम्। तत्कृतैश्च तन्त्रालोकादिभिरियमस्य महती प्रथा प्रत्यक्षा। न केवलमस्य महती पाण्डित्यप्रतिष्ठा तान्त्रिकेषु मान्त्रिकेषु च प्रस्थानेषु, साहित्यां नाट्यकलायामप्ययमाजानपावनो रसिकः कमनो दृष्टः। तत्रापि ध्वन्यालोकलोचननाट्यवेदविवृतिमुखा ग्रन्था उत्तमाः साक्षिणः। अस्य च महामहिम्न आचार्यधुरन्धरस्य जीवितसमयः किंस्वब्दीयदशमशतकोत्तरार्धम् एकादशशतकादिमपादश्चेति चरित्रविदा सुप्रसिद्धं न पुनः पल्लवनायोपादीयते। एतेषां गुरवश्च नैके प्रसिध्यन्ति। कीर्त्यन्ते च ते स्वयमेव स्वकृते मालिनीवार्त्तिक उपक्रमे —

"गुरुभ्योऽपि गरीयांसं गुरुं श्रीचुखलाभिधम्।
वन्दे यत्कृतसंस्कारः स्थितोऽस्मि गलितग्रहः॥
ततो गुरुतरः श्रीमान् भूतिराजो महामतिः।
जयताद् भक्तजनतासमुद्धरणसाहसः॥
श्रीसोमानन्दसम्बोधश्रीमदुत्पलनिस्सृताः।
जयन्ति संविदामोदसन्दर्भा दिक्प्रसर्पिणः॥
तद्दृष्टिसंसृतिच्छेदिप्रत्यभिज्ञोपदेशिनः।
श्रीमल्लक्ष्मणगुप्तस्य गुरोर्विजयते वचः॥"

इति।

---

* "प्रवरपुरनामधेये पुरे पूर्वं काश्मीरिकोऽभिनवगुप्तः।
मालिन्यादिमवाक्ये वार्त्तिकमेनद् रचयति स्म॥"
(मालिनीवार्त्तिकम्।)

अस्य च महानयप्रकाशस्यापूर्वस्य प्रकाशनायोपयुक्ता मातृका ब्रह्मश्री तिरुवल्ला परम्पूरिल् नारायणभट्टतिरिस्वामिका प्रायश्चतुश्शतसंवत्सरीजरत्तमा केरलीयलिपिः। विषयतः सम्पूर्णदेश्यापि मातृकेयमन्ते लुप्तकल्पा ग्रन्थावसिति-भागमस्पृशती दृष्टा। दयथैतत्प्रसाधनाय मातृकामर्पितवद्भ्यो महामनस्केभ्यो ग्रन्थस्वामिभ्य. परमा कृतज्ञतां प्रकटयन्नस्मि तमिमं प्रकाशं प्रकाशयन्नयं धन्यधन्यः॥

अनन्तशयनम्,
२४-९-११२.

के. साम्बशिवशास्त्री.

---

॥ श्रीः ॥

# महानयप्रकाशः ।

---

यस्याः क्रमाक्रमपदो(जल्सितन्त्र ? ज्झितत्र)स्त्रिरूपः
साक्षाद् विराजति(त)रां क्रमभूमिकान्तः ।
तां कामपि प्रगहनानुभवैकरूपां
देवीं नमाम्यपटटङ्कमयप्रतिष्ठाम् ॥ १ ॥

विचक्षणैर्यद्यपि सम्यगुक्तो
महार्थचक्रक्रमसम्प्रदायः ।
प्रकुर्वते हन्त तथापि युक्त्या
यथान्वितः स्वानुभवाविलुप्तः ॥ २ ॥

स्वात्मस्वरूपमनिकेतनमप्रमेयं
स्वाभासमच्छमविलुप्तमतिस्वतन्त्रम् ।
विश्वात्मकं तदतिवर्ति च यत् तदस्य
मिथ्याविकल्पजनितौ किल बन्धमोक्षौ ॥ ३ ॥

एवंविधं यदधिगन्तुमिहात्मतत्त्वं
मिथ्याविकल्पविभवोद्दलनं च सम्यक् ।
युक्तिं महानयमयीं न विहाय शक्यं
सर्वोत्तमोत्तमतमो हि ततो महार्थः ॥ ४ ॥

G P T 847 -00 28 2 1111 1

तस्यास्य सम्प्रति यथास्थितलोकयात्रा-
रूपस्य सर्वविषयप्रतिपत्तियुक्त्या ।
उन्मील्यते कथनपूजनसंक्रमात्मा
नित्याविलुप्तविभवो गुरुसम्प्रदायः ॥ ५ ॥

इदमनुभवसारयुक्तिगर्भं
गुरुमुखमुद्गतसंशयावमानम् ।
झटिति परपदाप्तयेऽन्तरं
हृदि परिमृश्य निधीयते महद्भिः ॥ ६ ॥

अतितीव्रशक्तिपातादारूढे शाम्भवे समावेशे ।
स्वानन्दामृतरूपं जीवन्मुक्तेः प्रकल्पते विश्वम् ॥ ७ ॥
अतिमात्रमध्यमृदुताभेदेनापि प्रवर्तमानस्य ।
सूक्ष्मेक्षिकाप्रकारो विलसति तस्यातिशक्तिपातस्य ॥ ८ ॥
अनिदंप्रथमतया यद् विश्वगतं व्यापकं निजं रूपम् ।
अनुपाययोगयुक्त्या गुरुमुखदृष्टेन सम्प्रदायेन ॥ ९ ॥

सर्वावरणनिर्मुक्तो हानादानपदोज्झितः ।
स्थितये स्वस्वरूपस्य नान्यत् किञ्चिदपेक्षते ॥ १४ ॥

निर्विकल्पविकल्पादिसंविदोघसमाश्रया ।
या चि(त?ति)स्तन्मयस्पर्शात् परानन्दचमत्कृ(तेः ? तिः)
[॥ १५ ॥

सा भूतव्योमवामेशी गुरुदृक्पातसाहसात् ।
पीठक्रमादौ सर्वत्र विशुद्धिस्तस्य जायते ॥ १६ ॥

अनपह्नवनीयस्य विश्वस्यास्य यथोदयः ।
स्थितिनाशौ स्वभावस्य स्वरूपे च विलेपनम् ॥ १७ ॥

निरावरणता चापि यथास्मिन् सति जायते ।
परानन्दचमत्कारचन्द्रिकाच्छान्तचेतसः ॥ १८ ॥

अत्र सर्वत्र विषये निर्विकल्पः प्रवर्तते ।
गुरुप्रसादाद् यज्ज्ञानं ++++ किलोच्यते ॥ १९ ॥

महातीव्रतमे + + + + स्वानुभवस्थिते ।
कथनादिक्रमातीता विशुद्धिस्तत्र काशते ॥ २० ॥

महातीव्रतमे चास्मिन् प्रवृत्ते गुरुशासनात् ।
दृष्टादृष्टादिसङ्केतकथामात्रा प्रकाशते ॥ २१ ॥

*प्रकाश(ते ? न्ते) महातीव्रे व्यवहारदशासुधाः (?) ।*
प्रत्येकविषयावृत्त्या बहिरन्तर्मुखोदयाः ॥ २२ ॥

संविद्देव्यो महाव्योमसंघादित्रोटिताग्रशलाः(?)।
तासां पूजनविच्छित्त्या स्वरूपं सम्प्रकाशते ॥ २३ ॥

विकल्पवासनाशून्यप्ररूढ(रसा ? स्वा)त्मसंविदः ।
प्रथते कस्यचिज्ज्ञानमनपेक्षितसाधनम् ॥ २४ ॥

तस्यास्य सम्प्रति यथास्थितलोकयात्रा-
रूपस्य सर्वविषयप्रतिपत्तियुक्त्या ।
उन्मील्यते कथनपूजनसत्क्रमात्मा
नित्याविलुप्तविभवो गुरुसम्प्रदायः ॥ ५ ॥

इदमनुभवसारयुक्तिगर्भं
गुरुमुखमुद्गतसंशयावमानम् ।
झटिति परपदास्पदेऽन्तरं
हृदि परिमृश्य निधीयते महद्भिः ॥ ६ ॥

अतितीव्रशक्तिपाताधारूढे शाम्भवे समावेशे ।
स्वानन्दामृतरूपं जीवन्मुक्तं प्रकल्पते विश्वम् ॥ ७ ॥
अतिमात्रमध्यमृदुताभेदेनापि प्रवर्तमानस्य ।
सद्धर्मेक्षिकाप्रकारो विलसति तस्यातिशक्तिपातस्य ॥ ८ ॥
अनिदम्प्रथमतया यद् विश्वगतं व्यापकं निजं रूपम् ।
अनुपाययोगयुक्त्या गुरुमुखदृष्टेन सम्प्रदानेन ॥ ९ ॥
सर्वानुभवदशाया यदलुप्तं सर्वदा भवेत् पृथक् ।
तस्य स्वभावविलसद्विश्वमयस्य स्वरूपकिरणस्य ॥ १० ॥
सोऽयं पुराणाधिष्ठानं क्रमः क्रमविवर्जितं ।
महार्थस्य परा निष्ठा गलितस्वपरस्थितेः ॥ ११ ॥
पुराणस्यादिसिद्धस्य यदधिष्ठानमात्मनः ।
गीतं पुराणाधिष्ठानं भापत्ता (तच्च ? तु तद्ध)चमम् ॥ १२ ॥
युक्तिचर्यादिविक्षेपवासनाक्षोभवर्जितः ।
अनुपायक्रमः सोऽयं यस्य रूढ(स्य ? : स) योगिराट् ॥ १३ ॥

सर्वावरणनिर्मुक्तो हानादानपदोज्झितः ।
स्थितये स्वस्वरूपस्य नान्यत् किञ्चिदपेक्षते ॥ १४ ॥
निर्विकल्पविकल्पादिसंविदोघसमाश्रया ।
या चि(त?ति)स्तन्मयस्पर्शात् परानन्दचमत्कृ(तेः?तिः)
[॥ १५ ॥
सा भूतव्योम वामेशी गुरुद्दक्पातसाहसात् ।
पीठक्रमादौ सर्वत्र विशुद्धिस्तस्य जायते ॥ १६ ॥
अनपह्नवनीयस्य विश्वस्यास्य यथोदयः ।
स्थितिनाशौ स्वभावस्य स्वरूपे च विलेपनम् ॥ १७ ॥
निरावरणता चापि यथास्मिन् सति जायते ।
परानन्दचमत्कारचन्द्रिकाच्छान्तचेतसः ॥ १८ ॥
अत्र सर्वत्र विषये निर्विकल्पः प्रवर्तते ।
गुरुप्रसादाद् यज्ज्ञानं ++++ किलोच्यते ॥ १९ ॥
महातीव्रतमे ++++ स्वानुभवस्थिते ।
कथनादिक्रमातीता विशुद्धिस्तत्र काशते ॥ २० ॥
महातीव्रतमे चास्मिन् प्रवृत्ते गुरुशासनात् ।
दृष्टादृष्टादिसङ्केतकथामात्रा प्रकाशते ॥ २१ ॥
प्रकाश(ते?न्ते) महातीव्रे व्यवहारदशामुवाः (?) ।
प्रत्येकविषयावृत्त्या बहिरन्तर्मुखोदयाः ॥ २२ ॥
संविद्व्यो महाव्योमसंघादिग्राटिनादशालाः(?)।
तासां पूजनविच्छित्त्या स्वरूपं नप्रकाशते ॥ २३ ॥
विकल्पवासनाशून्यप्रस्ट(सा?न्वा)ःप्रसंविदः ।
प्रथते दर्शयन्निच्छ.नमनपेक्षितसाधनम् ॥ २४ ॥

उद्रिक्तनिर्विकल्पांशं मन्दमन्दविकल्पतः ।
प्रथते कस्यचिज्ज्ञानं सङ्केतादिकथाश्रयात् ॥ २५ ॥
पूजनादिक्रमापेक्षं (स्वं ? सं)स्थिते + + कस्यचित् ।
विकल्पसामनन्तर्यान्निर्विकल्पः प्रवर्तते ॥ २६ ॥
अप्रवृत्तस्य + + + शक्तिपातस्य या स्थितिः ।
अतिमात्रादिभेदेन ततोऽयमु( चि ? दि)तः क्रमः ॥ २७ ॥
परधारासमारूढमाहेश्वर्यप्रदर्शकः ।
शक्तिपातक्रमो योऽयं महातीव्रतमादिकः ॥ २८ ॥
नान्यत्र स तथोद्दिष्ट इत्यतो गुरुगौरवात् ।
महानयक्रमे पूर्वे(उ ? म)हाशब्दोऽर्थयुक्तिभाक् ॥ २९ ॥
कुलकौलादिकाम्नायशाक्तत्रिकमतादिषु
सरहस्यप्रपञ्चेषु स्वरूपस्थितिहेतुषु ॥ ३० ॥
सिद्धान्ततन्त्रभेदेषु नान्योपायात्मकेषु च ।
स्थितेष्वपि च सोल्लेखो व्यापको हि महानयः ॥ ३१ ॥
पौर्वापर्यपरिक्षीणा ये महार्थार्थिनः किल ।
अस्ति नान्या गतिस्तेषां विकल्पग्राससाहसात् ॥ ३२ ॥
सुप्रबुद्धोऽनपेक्षोऽत्र प्रबुद्धोऽपेक्षते पुनः ।
सङ्केतादिकथामात्रं तथा चक्रप्रपूजनम् ॥ ३३ ॥
दृष्टनष्टादि सङ्केतकथामात्रस्य मर्म यत् ।
तत् प्रपञ्चितमन्यत्र यदतः साम्प्रतं मनाक् ॥ ३४ ॥
एतत्पूजनमक्रमक्रममयं पीठक्रमोपक्रमः
(व ? च)क्रोल्लासविभागयुक्तिघट(नं ? ना)सत्सम्प्र-
[दायोज्ज्वलः ।

मा गा(ल्लुप्त)मिहेदृशं गुरुमुखं कालक्रमादित्यतः
सम्यक् + +++++++ नवशादसामिरुन्मील्यते
[ ॥ ३५ ॥

इति श्रीमहानयप्रकाशे सर्ववेलक्षण्यप्रतिपादनो नाम
प्रथमोल्लासः ॥

---

अथ द्वितीय उल्लासः ।

परमरहस्या + + + गुरुवरमुखसम्प्रदायसद्बीजम् ।
पीठक्रमस्वरूपं नत्वा सन्तन्यते प्रथमम् ॥ १ ॥
यथास्थितं समाश्रित्य भूतभावात्मकं जगत् ।
पीठक्रमस्य संस्थानं कथ्यते हृदयङ्गमम् ॥ २ ॥
देवीचक्रस्य यः स्फारः पीठक्रमतया स्थितः ।
यागादिक्रमरूपेण तज्ज्ञैर्गुरुणोच्यते ॥ ३ ॥
प्राधान्येन ।स्थितो लोके व्यवहारः क्रियात्मकः ।
अतः पीठक्रमज्ञप्तिस्तन्मुखेनैव कथ्यते ॥ ४ ॥
अनेनैवाशयेनादौ चरुप्राशनपूर्वकः ।
गुरुणा सम्प्रदायस्य भाजनं क्रियते पशुः ॥ ५ ॥
पीठश्मशानक्षेत्रेशमेलयागात्मको हि यः ।
पीठक्रमोऽत्र पीठेभ्यो व्योमेश्वर्यादयः क्रमात् ॥ ६ ॥
यः शून्यप्राणधीबुद्धिकर्मेन्द्रियचयात्मकः ।
कायो यश्च जडत्वेन बाह्येन विषयात्मना ॥ ७ ॥
व्योम्न आरभ्य पृथिवीपर्यन्तेन व्यवस्थितः ।
अनन्तानुभवाधारासिद्धयोगिनिषेवितः ॥ ८ ॥

एतत्सङ्केतकस्थानमाश्रिताश्चिन्मरीचयः ।
दृश्यन्ते प्रकटं यस्मादसौ पीठक्रमस्ततः ॥ ९ ॥
कर्मेन्द्रियात्मनो यागाच्छून्यान्तं यावदास्थितः ।
उद्योगादिक्रमः काये बहिः पृथ्व्याद्यनुक्रमात् ॥ १० ॥
पूर्वं पूर्वं महाव्याप्तिरत्र सर्वत्र वर्तते ।
आश्रयाश्रयिभावश्चाप्यविभिन्नतया स्थितः ॥ ११ ॥
निशावरणरूपत्वादनन्तत्वादनाकुला ।
पीठस्वरु(पं ? पे) व्योमेशि विश्रान्तिः सर्वसंविदाम् ॥ १२ ॥
अन्तश्शून्यात्मना काये सैव पीठतया स्थिता ।
यः कर्मेन्द्रियपर्यन्तः संवित्स्फारस्तदाश्रयः ॥ १३ ॥
पातादारभ्य पृथिवीपर्यन्तं यज्जडात्मकम् ।
एतस्यैवाश्रयत्वेन नभः पीठकला बहिः ॥ १४ ॥
अकालकलिते व्योम्नि स्पन्दमाना तु या चिति ।
कालदाहैकभूः सैषा श्मशानं खेचरी मता ॥ १५ ॥
अपवेद्ये सुषुप्तेषु प्राणः स्पन्दनशक्तिमान् ।
कालं ग्रसीत देहान्तः श्मशानं स तथा स्मृत. ॥ १६ ॥
वेद्यस्य कलनारु(पं ? पे) कालस्त्वपि समाप्यते ।
कालग्रसनशीलत्वात् त्वक् श्मशानं तु सा बहिः ॥ १७ ॥
एतद्रूपं परं क्षेत्रं प्रकाशानन्दभूमिगम् ।
पालये + + + + ष्यां भूपरि क्षेत्रपरस्ततः ॥ १८ ॥
बुद्धिप्रमाता देहान्तः शून्यप्राणमयं यतः ।
क्षेत्रं पालयते तेन क्षेत्रेश(स्यैः ? श्च)त्र तन्मयः ॥ १९ ॥

बाह्येऽपि विषये तेजस्त्वङ् नभोमण्डलात्मकम् ।
क्षेत्रं पालयते तेन तदात्मत्वेन सैव तत् ॥ २० ॥
विश्वाभासमयं ज्ञानं यद्गतं परसंविदि ।
सामरस्यात्मना सैषा मेलः संहारभक्षिणी ॥ २१ ॥
आभासानां स संहारो या प्रकाशान्तरास्थितिः ।
सामरस्यात्मना सैषा प्रत्यावृत्त्या समन्ततः ॥ २२ ॥
भक्षयन्त्यान्तरस्पर्शादतः संहारभक्षिणी ।
विषयाभोगसम्भूतचमत्कारोपबृंहितम् ॥ २३ ॥
बुद्धीन्द्रियाभासमयं ज्ञानं यत्रोपशाम्यति ।
बीजभावात्मना मेलः स्निग्धो यः प्रत्यगात्मना ॥ २४ ॥
अ + चता बहिर्येयं प्रतिबिम्बग्रहक्षमा ।
गम्यान्तररसास्वादमेलावात्मानुभूयते ॥ २५ ॥
वासनाविभ्रमसंस्कारसामरस्यात्मना स्थितिः ।
आहन्यमाने रभसात् परतर्पणहेतुनः ॥ २६ ॥
पूर्णान्तरमहारावद्रावणा(द ?)लिकुलाकुला ।
निरावरणदुर्लक्ष्यस्वविश्रान्तिपदोन्मुखी(म् ?) ॥ २७ ॥
आद्य(गाय ? याग)मयी (यो ? ये)यं गभीरोदारभूमिका ।
रौद्ररौद्रेश्वरी यामस्तस्यादिष्टो गुरूत्तमैः ॥ २८ ॥
अलंग्रासंक्रमः सोऽयं महासाहसजन्मभूः ।
अधिकप्रियमेलावारूढमेलोपलक्षणः ॥ २९ ॥
अन्तःकायेऽपि ये भावा ह्युक्ताः कर्मेन्द्रियैः स्फुटाः ।
तत्क्षणे विस्मृतिस्तेषामाकाङ्क्षायाः परिक्षयात् ॥ ३० ॥

सान्तरीयकविश्रान्तिर्योऽयं यागः स्वसाक्षितः ।
अत्रानुगुण्यमेतस्या देव्याः सञ्चेत्यते स्फुटम् ॥ ३१ ॥
दृश्यते यत् तया (वहिः पृथिवी ? पृथ्वी) तत्तत्कर्मव्यपा-
[श्रया ।
स यागो यत्र भावानां विश्रान्तिः समनन्तरम् ॥ ३२ ॥
इत्थं (सास्य। ? श्मशा)नतारूपचिज्जडात्मप्रमेयता(म्) ।
पीठक्रमेण संश्रित्य देवीचक्रं विजृम्भते ॥ ३३ ॥
सर्वव्यापकरूपत्वात् तथा प्रत्यक्षवेदनात् ।
सर्वाद्यन्तप्रतिष्ठानादेतत् सर्वोत्तमत्वतः ॥ ३४ ॥
सर्वंसहस्वभावत्वात् परानुग्रहहेतुतः ।
प्रकर्षनुतिमात्रत्वात् पीठं प्रणवसंज्ञितम् ॥ ३५ ॥
महाचक्रक्रमो योऽयं कथ्यमानो यथायथम् ।
अत्रान्तर्नेत्रनाथस्य प्रकटानुभवोऽस्त्र(न् ? त) ॥ ३६ ॥
ततो व्या(नं ? तं) तु तत्पीठं सर्वपीठोत्तमं बहिः ।
योगिनीसिद्धसंसेव्यमुत्तरस्यां दिशि स्थितम् ॥ ३७ ॥
धामक्रमस्यापि वपुरन्तरेव निरूपितम् ।
सर्वज्ञानाश्रयत्वेन लोकयात्राप्रतिष्ठितम् ॥ ३८ ॥
यत्र यत्र पतन्त्येता अन्तर्वा यदि वा बहिः ।
संविद्देव्यो व्याप्तिसारास्तद्धाम परिकीर्तितम् ॥ ३९ ॥
यदि काचिदिहान्यास्ति सूक्ष्मा संशयकालि(ता ? मा) ।
प्रमेयलोचनादग्रे सा स्वयं विनिवर्तते ॥ ४० ॥
प्रत्यक्षकार्यविषयानुभवैकनिष्ठः
पीठक्रमस्य कथितो गुरुसम्प्रदायः ।

अत्रैव दत्तहृदया विलयं नयन्ति
मिथ्याविकल्पजनितं भवमोक्षजालम् ॥ ४१ ॥

इति श्रीमहानयप्रकाशे पीठस्वरूपनिरूपणं नाम
द्वितीयोल्लासः ॥

---

## अथ तृतीय उल्लासः।

उदयावभासकालग्रासा(दीनां) स्वरूपविश्रान्तिः।
आकुञ्चनप्र(का ? सा)रणवशतो यत्रास्ति तत्पदं नत्वा ॥१॥

आमूलविश्वविभवप्रस्पन्दनयुक्तिसुन्दरोदारम्।
प्रातीतिकस्वरूपं ब्रूमो व्योमेश्वरीचक्रम् ॥ २ ॥

पीठक्रमे यत् प्रकटं रश्मिचक्रं प्रतिष्ठितम्।
आ मूलात् तस्य संस्थानं कथ्यते संवि(दुन्म?दात्म)ना ॥३॥

शब्दादिपञ्चवर्गात्मविश्वं हि यदिदं स्थितम्।
न शक्यं तदपह्नोतुं स्वसंवेदनसिद्धितः ॥ ४ ॥

संवेदनाद् बहिर्भावेनास्य सिद्धिः कथञ्चन।
ज्ञानात्मतां विना यस्माद् बाह्यतापि न सिध्यति ॥ ५ ॥

अतो बाह्यात्मता लोके शरीरापेक्षया स्थिता।
संवेदनं पृथक् (तस्य) सर्वज्ञेनापि दुष्करम् ॥ ६ ॥

अतः संवेदनायत्ता सत्ता विश्वस्य सर्वतः।
ज्ञानाधिकत्वात् सिद्धेस्तु न माया नापि वासना ॥ ७ ॥

दिग्देशकाला(का)रादिकलातङ्कविवर्जितम् ।
क(त्प ? ल्प्य)विश्वात्मकत्वेऽपि तदुत्तीर्णतया स्थितम् ॥ ८ ॥
ननु विश्वमयी संवित् सर्वस्यानुभवात् स्थिता ।
तदुत्तीर्णस्वरूपायास्तस्या नानुभवस्तदा ॥ ९ ॥
प्रथैव चेत कथं विश्वं चिन्मात्रं हि प्र(थेप्य ? शेक्ष्य)ति ।
निरावरणरूपायाश्चितो विश्वात्मता कुतः ॥ १० ॥
नीलप्रकारो नीलात्मा प्रकाशातिशयो न चेत् ।
नीलप्रकारो नैव स्यादा(द्व ? त्म)संवित्प्रथाबलात् ॥ ११ ॥
तस्मान्नीलप्रकाशो यः स नीलातिशयात्मकः ।
नीलाभिन्नप्रथासिद्धा नीलताप्यनुभूयते ॥ १२ ॥
तस्याः प्रथैकरूपत्वे नीलनिह्नवसम्भवः ।
प्रथाबहिष्ट्वेऽप्येपैव न्यायोक्तिर्यदतः पृथक् ॥ १३ ॥
वासनाहेतुवैचित्र्या(द्) विश्ववैचित्र्यसङ्गति(ः) ।
नतु शुद्धस्वरूपायाः प्रथाया एव जृम्भणात् ॥ १४ ॥
प्रकाशमान विश्व तदित्युक्तिरुपपद्यते ।
प्रकाश एव विश्वं तु सर्वानुभववासितम् ॥ १५ ॥
विश्वोत्तीर्णप्रकाशस्तु स्वतन्त्रो नानुभूयते ।
यतः स्वप्रथोऽप्येप सिद्धो विश्वनियन्त्रितः ॥ १६ ॥
अत्रोच्यते यदुक्त तु विश्वोत्तीर्णचितिः कथम् ।
सन्वेत्स्यते समाविश्य विश्वानुभवभूमिकाम् ॥ १७ ॥
नीलानुभवकाले हि नीलरूपणयोज्झिता ।
निर्विकल्पपराहन्तास्वरूपा प्रथते प्रथा ॥ १८ ॥

सविकल्पदशायामेऽपि सुखनीलादिसंविदाम् ।
विशेषानुभवो नास्ति विवादोऽन्तर्बहिष्ठया ॥ १९ ॥
तथैव नीलानुभवादभिन्नोऽपि तदुज्झितः ।
अन्तर्मुखप्रकाशो यः पराहन्तात्मकः स्थितः ॥ २० ॥
हेवाकात् केवलं सोऽन्यैस्तत्त्वज्ञैरुपलभ्यते ।
अन्यथा नीलसंविचिरपि नैव प्रसिध्यति ॥ २१ ॥
आभासं न विना यस्मात् सत्ता संविद इष्यते ।
आभासोऽपि कथं सिध्येत् किल संवेदनं विना ॥ २२ ॥
अन्योन्यापेक्षया हीत्थं नीलसंविन्न सिध्यति ।
आभासनिरपेक्षात्र द्रष्टव्या संविदः स्थितिः ॥ २३ ॥
परतन्त्रस्वतन्त्रत्वे तत्राकिञ्चित्करे यतः ।
नीलानुभवसंसिद्धिं न समर्थयितुं क्षमे ॥ २४ ॥
सिद्धेः प्राक् परतन्त्रत्वं समं नीलप्रकाशयोः ।
सिद्धे रूपे स्वतन्त्रत्वं समं नीलप्रकाशयोः ॥ २५ ॥
अथ नीलं परापे(क्षं ? क्षां) प्रथ(या ? ये)न्न प्रथा पुनः ।
स्वयम्प्रथनशीलत्वान्नीलमात्मन्यपेक्षते ॥ २६ ॥
परतन्त्रमतो नीलं स्वतन्त्रा तु प्रथा मता ।
परतन्त्रस्वतन्त्रत्वे तत्राकिञ्चित्करे कथम् ॥ २७ ॥
ज्ञातमेतद् यथा नीलमुत्पन्नमपि हेतुतः ।
प्रका(शया ? शा)पेक्षया ह्युक्तं परतन्त्रं न रूपतः ॥ २८ ॥
नीलं नीलात्मके रूपे स्वतन्त्रं न प्रथात्मके ।
प्रकाशस्तु प्रथामात्रादतिरिक्तो न विद्यते ॥ २९ ॥

तावन्मात्रे प्रकाशस्य नीलापेक्षा न युज्यते ।
नीलात्मनि तु नीलस्य प्रथा(क्षेप ? पे)क्षास्ति सर्वथा ॥३०॥
नीलात्मकं हि नीलस्य रूपं सिद्धं स्वहेतुतः ।
न प्रकाशात्मकमपि प्रायशोऽन्धादिदर्शनात् ॥ ३१ ॥
प्रकाशरूपे तूरपक्षे स्वपरप्रथनात्मके ।
यथानुभवसंसिद्धौ सर्वापेक्षा निवर्तते ॥ ३२ ॥
नीलं तर्हि स्वसि(द्धा ? द्ध्य)र्थं न प्रकाशमपेक्षते ।
प्रकाशस्तूपलम्भार्थं नीलमात्मन्यपेक्षते ॥ ३३ ॥
पारतन्त्र्यं प्रकाशस्य सुतरामित्थमुल्लसेत् ।
आभासरहिता यस्मान्नैतस्योत्पत्तिरिष्यते ॥ ३४ ॥
न(तु ? नु) नीलप्रकाशे (या ? यः) प्रकाशांशो व्यवस्थितः ।
तस्य स्वरूपसत्तार्थं नीलापेक्षा कथं भवेत् ॥ ३५ ॥
स्वरूपलाभः पूर्वस्मात् प्रथांशात् कारणात्मकात् ।
नीलपेक्षा न तत्रास्ति स्वस्फुरत्त्वेन संविदः ॥ ३६ ॥
नीलांशस्य प्रथार्थ(त्वं ? त्वे) प्रथापेक्षास्ति वस्तुतः ।
तदेतद्धि स्वतन्त्रत्वं परतन्त्रत्वलक्षणम् ॥ ३७ ॥
इत्थं किमेतदुक्तं स्यात् सोपाधि निरुपाधि वा ।
प्रकाशस्य निजं रूपमथवाप्युभयात्मकम् ॥ ३८ ॥
सोपाधि चेदुपाधेश्च तस्य चान्योन्यसंश्रयात् ।
उभयासिद्धितो रूपं सिध्येत् सोपाधिकं कथम् ॥ ३९ ॥
अथानुपाधि तद्रूपमुपाधेः प्रथनं कथम ।
परस्यापरनिष्ठत्वादेवं लुप्येज्जगत्स्थितिः ॥ ४० ॥

अथोभयात्मकं रूपं सोपाध्यपि तदुज्झितम् ।
तथा सर्वं समीचीनमिति चेत् तर्हि (चप्य ? चेत्य)ताम्
[ ॥ ४१ ॥
तत्रानुपाधि यद्रूपं तस्यानुभवनं कथम् ।
स्वसंवेदनरूपायां निर्विकल्पभुवि स्थितम् ॥ ४२ ॥
नचापलापः कर्तव्यः पूर्वदोषप्रसङ्गतः ।
नचानुपाधिरूपस्य नीलांशत्वेन वेदनम् ॥ ४३ ॥
पराहन्तात्मकं तस्मात् तदसाङ्केतिकं मतम् ।
प्रत्यक्षभेदः कथितो यः स्वसंवेदनात्मकः ॥ ४४ ॥
तत्राशयो नचेदेष तद्भेदः किन्निबन्धनः ।
ननु रक्तोदकन्या(यो ? याद्) भवतोऽपि स्मृतिः कथम् ॥
रक्तोदकात्मकं रूपमेकमेव हि तात्त्विकम् ।
विकल्पस्तु स्वशिल्पेन त(द्भुनर्त्ति ? द्भिनत्ति) विशेषतः
[ ॥ ४६ ॥
तद्वन्नीलप्रकाशात्मरूप(माखण्ड्य ? आखण्ड)तः स्थितम् ।
विकल्पशिल्पतस्तत्र केवलं खण्डनं स्थितम् ॥ ४७ ॥
अविभागात्मकाद् भासात् तादृशादेव कारणात् ।
कार्यस्य तादृशस्यैव प्रबन्धेन प्रवर्तनम् ॥ ४८ ॥
अन्योन्याश्रयतायास्तु दोषा वैकल्पिका मताः ।
सम्भवेयुः कथं तत्र निर्विकल्पप्रतिष्ठितौ ॥ ४९ ॥
ज्ञातं किन्त्वेष त्रिगुणो न्यायो नीलप्रकाशयोः ।
विरोधात् तात्रदेकत्वं स्याज्जडाजडयोः कथम् ॥ ५० ॥
निरंशस्त्वप्रकाशश्च प्रकाशस्तात्त्विको मतः ।
साङ्गश्चान्यप्रथाधीनोऽप्यभ्यासस्तात्त्विको मतः ॥ ५१ ॥

सर्वथैक्येऽन्य + + + मत्यासत्यत्वहानितः ।
एकानेकस्वभावत्वात् स्वभावो न निरुध्यते ॥ ५२ ॥
स्वभावविनिरोधवस्तु बाधितोऽनुभवेन यत् ।
तत् स्वसिद्धप्रकाशोऽन्य(इय ? न्य)वस्थाहेतुतामियात् ॥
अवस्तुत्वेऽपि तदेकत्वोऽभेदो नीलप्रकाशयोः ।
ततो रक्तोदकन्यायोऽप्यङ्गतोऽत्र कथं भवेत् ॥ ५४ ॥
अन्यच्च नीलप्रथयोरभेदे वास्तवे कथम् ।
आभासविगमादच्छान्मुक्तिभूता प्रथा भवेत् ॥ ५५ ॥
अनादिकप्रवाहात्मा .... ... .. ....
. .. .... ... .... मायाभासप्रतिष्ठिते. ॥ ५६ ॥
ज्ञातृत्वसर्वत्वसर्वतासार ... . . . ।
॥ ५७ ॥
प्रथावासनयोश्चान्या सामग्री नास्ति वास्तवी ।
प्रकाशविगमेऽपि स्याद् यद्धेतोर्वासनाक्षय. ॥ ५८ ॥
तन्मुक्तिकाले यस्तज्ज्ञाभासोच्छेद इष्यते ।
नस्वप्रासाम्य (?) निष्कलस्वहृतोऽविरामतः ॥ ५९ ॥
तत्रोपादानशुद्धयादि यदिरञ्चित परिकल्प्यते ।
न तत् सर्वज्ञताबीज युक्तिन. पर्यवस्यति ॥ ६० ॥
तस्मात् सोपाधिक ज्ञान परस्परसमाश्रयात् ।
तादात्म्येऽपि कथं नाम प्रतिष्ठामधिगच्छति ॥ ६१ ॥
प्रकाशस्य च चिन्मात्ररूप यत् स्वप्रतिष्ठितम् ।
तदुपाधि प्रति कथं मात्रयापि प्रसर्पति ॥ ६२ ॥

प्रतीतौ यच्च नारूढं तादात्म्येऽपि न तद् भवेत् ।
प्रतीतिभाजनं यद्वन्मणिरौप्यादिकैरलम् ॥ ६३ ॥

अनेनैवाशयेनोक्तो युक्तितत्त्वविचक्षणैः ।
प्रकाशार्थोपरक्तोऽपि स्फटिकादि जालोमपम्(?) ॥ ६४ ॥

ननु नीलप्रथाकाले नीलात्मातिरयोऽधिकः ।
अपह्नोतुं कथं शक्यः परतन्त्रमय(ः?)प्रथः ॥ ६५ ॥

अधिकश्चेत् कथं भाति भाति चेदधिकः कथम् ।
भासते चाधिकश्चेति परस्परमसङ्गतम् ॥ ६६ ॥

प्रकाश एव तर्हि स्यान्निरुपाधिर्निरञ्जनः ।
एवञ्च नानानुभवमयी नश्येज्जगत्स्थितिः ॥ ६७ ॥

अत्रोच्यते यदधिकं भानात् तत्तावत्प्रथमयुक्तिकः(?) ।
+ + + + + + + + तत्र त्वित्थं समर्थना ॥ ६८ ॥

यदा स्वोल्लेखविभवः प्रथया जगदुद्गमः ।
अनवच्छिन्नरूपत्वं तदा तस्य निजं प्रति ॥ ६९ ॥

(चि?चि)दुल्लेखम(लं?यं) विश्वं चिदुल्लेखे प्रतिष्ठितम् ।
चिदुल्लेखादनधिकं लोकयात्राप्रसाधकम् ॥ ७० ॥

उल्लेखश्च विमर्शात्मा स्वाभासमयनिर्मितः ।
इयं सा वस्तुनः सिद्धिस्तात्त्विकी विदुषां मता ॥ ७१ ॥

सेयं स्फुरत्ता बोधस्य महासत्तास्वरूपिणी ।
स्वोल्लेखकर्तृतासारा प्रत्यक्षानुभवात् स्थिता ॥ ७२ ॥

(ए)तत् स्वोल्लेखविभवमयं विश्वं स्वभावतः ।
स्वतन्त्रत्वादनुन्मग्नमुन्मग्नमिव भासयेत् ॥ ७३ ॥

अखण्डविषया(द ? नन्द)मयादनुभवाच्च तत् ।
सामरस्येन सर्वत्र स्थि(तश्चि ? तं चि)न्मात्रसारतः ॥ ७४ ॥
दिग्देशकालवैचित्र्यभेदाद् भागवताद् यदि ।
तदात्मवर्तिनि ज्ञाने भेदः स्यात् तत्प्रथा कथम् ॥ ७५ ॥
प्रथासामर्थ्य(तः) तस्मात् तद्भेदो न व्यवस्थितः ।
नवांशांशिकया भेद आभासेऽप्यनुभूयते ॥ ७६ ॥
तिलराशिवदज्ञानात् सङ्गतत्वेन वासनात् ।
अतः प्र(शेथ ? थै)करूपत्वमाभासस्य व्यवस्थितम्
[ ॥ ७७ ॥
अन्यच्च चित्रविज्ञानमेत(मे ? दे)वात्रभासते ।
तत्प्रपञ्चो विभिन्नोऽपि तद्रूपं (ज्ञे ? ज्ञा)तुमक्षमः ॥ ७८ ॥
नच व्यस्तः समस्तो वा तत्स्वरूपस्य भेदकः ।
तथात्वानुभवासिद्धेः समं तत्प्रथनं कथम् ॥ ७९ ॥
तद्वद् विश्वमयी संविदेका चेत् तत्प्रथा कथम् ।
तन्नियन्त्रणया चास्या एकत्वं परिहीयते ॥ ८० ॥
विश्वावेशेऽपि तत्संवित् त(टा ? त्तद्)रूपणयोज्झिता ।
अखण्डानुभवात्मत्वात् सामरस्यतया स्थिता ॥ ८१ ॥
अपटाटङ्कता सेयं गम्भीरोदारता तथा ।
इदं तद् दुर्घटैश्वर्यमसामान्यस्वभावकम् ॥ ८२ ॥
संविदा भासमाने च रूपे भ्रान्तिर्न विद्यते ।
अन्यावष्टम्भतोऽन्यस्य प्रथनं भ्रान्तिरिष्यते ॥ ८३ ॥
न स्वभासप्रथा भ्रान्ता स्वसंवेदनसिद्धितः ।
स्वसंवेदनसिद्धत्वं न कथञ्चन बाधितम् ॥ ८४ ॥

बहिश्चन्द्रद्वयाभावात् तद्बाधोत्तरकालिका ।
ननु द्विचन्द्रानुभवे प्रथामात्रैकजीविते ॥ ८५ ॥
स्वसंवेदनरूपस्य यदि बाधा भवेत् ततः ।
तदेकमयरूपत्वाद् भवेद् बाधापि बाधिता ॥ ८६ ॥
तस्मान्निजोल्लेखमयं स्वस्वसंवेदनात्मकम् ।
संविदेवी जगच्चित्रं निर्मिमीते स्वभित्तिकम् ॥ ८७ ॥
विवर्तपरिणामादि न किञ्चित् संविदोऽधिकम् ।
यदसत्यादिकल्नावशाद् विश्वस्य सम्भवः ॥ ८८ ॥
नचापि विश्ववैचित्र्यं तस्य स्याद् वासनात्मकम् ।
यथर्द्धि प्रातियोदि(?)गम्भीरोदारसंविदः ॥ ८९ ॥
उल्लिख्यमानं तद्रूपं ना(ना?ना)वैचित्र्यशोभितम् ।
फेनवत् संविदुद्बुद्धं तत्सामर्थ्याद् विजृम्भते ॥ ९० ॥
ईदृक् स्वातन्त्र्यमाश्रित्य संविदः पारमार्थिकम् ।
प्रमेयजातमखिलं स्थितं शक्यसमर्थनम् ॥ ९१ ॥
प्रत्यक्षरूपमाश्रित्य विपयानुभवात्मकम् ।
महानयस्यानुगुणं चिद्रूपं प्रतिपादितम् ॥ ९२ ॥
बहुवक्तव्यता यस्मात् प्रमेयस्यास्य वर्तते ।
अतो विरम्यतेऽस्माभिर्दिङ्मात्रं तु प्रकाशितम् ॥ ९३ ॥
संविदः साश्रयाः काश्चित् काश्चनापि निराश्रयाः ।
तत्रापि तासां वैचित्र्यं सविकल्पाविकल्पतः ॥ ९४ ॥
तत्रापि बहुवैचित्र्यं नियतानियतात्मकम् ।
ज्ञानज्ञेयप्रपञ्चश्च तत्रापि बहुभूमिकः ॥ ९५ ॥

अखण्डनिपया(द ? नन्द)मयादनुभवाच्च तत् ।
सामरस्येन सर्वत्र स्थि(तश्चि ? त चि)न्मात्रसारत. ॥ ७४ ॥
दिग्देशकालवैचित्र्यभेदाद् भागवताद् यदि ।
तदात्मवर्तिनि ज्ञाने भेदः स्यात् तत्प्रथा कथम् ॥ ७५ ॥
प्रथासाम॰र्थ(त.) तस्मात् तद्भेदो न व्यवस्थितः ।
नराशाशिकया भेद आभासेऽप्यनुभूयते ॥ ७६ ॥
तिलराशिवद्ज्ञानात् सङ्गतत्वेन वासनात् ।
अतः प्र(शेय ? थै)स्वरूपत्वमाभासस्य व्यवस्थितम्
[ ॥ ७७ ॥
अन्यच्च चित्रविज्ञानमेत(मे ? द्वे)द्यावभासते ।
तत्प्रपञ्चो विभिन्नोऽपि तद्रूप (ज्ञे ? ज्ञा)तुमक्षम ॥ ७८ ॥
नच व्यस्त समस्तो वा तत्स्वरूपस्य भेदक. ।
नयात्वानुभवासिद्धे. सम तत्प्रथन कथम् ॥ ७९ ॥
तद्वद् विश्वमयी चविद्का चेत् तत्प्रथा कथम् ।
तन्नियन्त्रणया चाप्या एकत्व परिहीयते ॥ ८० ॥
विश्ववेशेऽपि तत्संवित् त(गा ? द्द)रूपणयोज्झिता ।
अखण्डानुभवात्मत्वात् सामरस्यतया स्थिता ॥ ८१ ॥
अपटाटङ्कता सेय गम्भीरोदारता तथा ।
इत्त तद् दुर्घटैश्वर्यमसामान्यस्वभावकम् ॥ ८२ ॥
संविदा भासमाने च रूपे भ्रान्तिर्न विद्यते ।
अन्यावष्टम्भतोऽन्यस्य प्रथन भ्रान्तिरिष्यते ॥ ८३ ॥
न स्वभावप्रथा भ्रान्ता स्वसवेदनसिद्धित ।
स्वसवेदनसिद्धत्व न कथञ्चन बाधितम् ॥ ८४ ॥

वहिश्चन्द्रद्वयाभावात् तद्बाधोत्तरकालिका ।
ननु द्विचन्द्रानुभवे प्रथमात्रैकजीविते ॥ ८५ ॥
स्वसंवेदनरूपस्य यदि बाधा भवेत् ततः ।
तदेकमयरूपत्वाद् भवेद् बाधापि बाधिता ॥ ८६ ॥
तस्मान्निजोल्लेखमयं स्वस्वसंवेदनात्मकम् ।
संविदेवी जगच्चित्रं निर्मिमीते स्वभित्तिकम् ॥ ८७ ॥
विवर्तपरिणामादि न किञ्चित् संविदोऽधिकम् ।
यदसत्यादिकलनावशाद् विश्वस्य सम्भवः ॥ ८८ ॥
नचापि विश्ववैचित्र्यं तस्य स्याद् वासनात्मकम् ।
यथर्द्धि प्रातिर्यादि(?)गम्भीरोदारसंविदः ॥ ८९ ॥
उल्लिख्यमानं तद्रूपं ना(म्ना ? ना)वैचित्र्यशोभितम् ।
फेनवत् संविदुद्बुद्धं तत्सामर्थ्याद् विजृम्भते ॥ ९० ॥
ईदृक् स्वातन्त्र्यमाश्रित्य संविदः पारमार्थिकम् ।
प्रमेयजातमखिलं स्थितं शक्यसमर्थनम् ॥ ९१ ॥
प्रत्यक्षरूपमाश्रित्य विषयानुभवात्मकम् ।
महानयस्यानुगुणं चिद्रूपं प्रतिपादितम् ॥ ९२ ॥
वहुवक्तव्यता यस्मात् प्रमेयस्यास्य वर्तते ।
अतो विरम्यतेऽस्माभिर्दिङ्मात्रं तु प्रकाशितम् ॥ ९३ ॥
संविदः साश्रयाः काश्चित् काश्चनापि निराश्रयाः ।
तत्रापि तासां वैचित्र्यं सविकल्पाविकल्पतः ॥ ९४ ॥
तत्रापि वहुवैचित्र्यं नियतानियतात्मकम् ।
ज्ञानज्ञेयप्रपञ्चश्च तत्रापि वहुभूमिकः ॥ ९५ ॥

श्रद्धाश्रद्धाक्रियाजालफलानुगुणयोगतः ।
तत्रापि स्वर्गनरकाद्यनन्त(न ? म)तिविभ्रमाः ॥ ९६ ॥
अतात्त्विका बन्धमोक्षविभेदा अपि तत्र च ।
अनन्तलोकसंस्थान(ः ?)प्रभवाश्च तथाविधाः ॥ ९७ ॥
तथा(द्यन्म ? श्यानं म)नोभूमिमतिक्रम्यातिवर्तते ।
आ(द्या ? श्या)नसंविदंशस्य तदेतत् स्फूर्जितं मतम्
[॥ ९८ ॥
अविकल्पनिजाभोगविमर्शात्ममयं च तत् ।
स्वच्छैकरूपस्वच्छन्दचिद्रसाश्यानतामयम् ॥ ९९ ॥
क्रमाक्रमपदावेशि प्रतिभारूपणादिके ।
अनन्तागाधगम्भीरे संविद्रूपे निमज्जति ॥ १०० ॥
विश्वात्मकं तदन्यच्च रूपमेतद् यदीशितुः ।
अस्तिनास्तिव्यतिक्रान्तं सर्वाश्रयनिराश्रयम् ॥ १०१ ॥
अप्रकाशप्रकाशात्माप्यसमञ्जसमञ्ज(सा ? सम्) ।
परा शक्ति विना तस्य स्थितस्यापि स्वभावतः ॥ १०२ ॥
चिच्चमत्कारविश्रान्तिवैक्लव्यादप्रतिष्ठिते(ः) ।
अस(ङ्क ? त्क)ल्प(ल्व)मित्यस्य तदपेक्षित्वमिष्यते ॥ १०३ ॥
महेशस्यात्मविश्रान्तिः पराहन्तात्मिका हि या ।
तस्या अपि परावस्था (या ? भा)ति सूक्ष्मप्रभेदतः ॥ १०४ ॥
तद्देवीधाम (या ? य)त्रासौ कान्दिशीको विभुर्भवेत् ।
भावाभावौ प्रकाशेऽन्तः प्रतिष्ठामधिगच्छतः ॥ १०५ ॥
स चापि सकलापेक्षाशून्याया चिच्चमत्कृतौ ।
तारतम्यादिकलनावासनावेधदूरगे ॥ १०६ ॥

परविश्रान्तिपर्यन्ते सापि विश्राम्यति स्वतः ।
परप्रकाशविश्रान्तिदशायामपि यत् स्थिताः ॥ १०७ ॥
वासनावेधसंस्कारा भावाभावोभयात्मकाः ।
अतस्तामसनीकृत्य या विश्रान्तिरनुत्तरा ॥ १०८ ॥
सा देवी कथ्यते तस्या नयोऽसौ देवतानयः ।
यत्रापदे परिक्षी(णा ? णो)ऽपि टङ्कोऽसौ नयस्ततः ॥ १०९ ॥
या कालग्रासविश्रान्तिस्तद्रूपं परमेशितुः ।
या तु विश्रान्तिविश्रान्तिस्तद्देवीरूपमिष्यते ॥ ११० ॥
इत्थं स्वू(क्षिम ? क्ष्मे)क्षितारूपो भेदो यत् परमेशयोः ।
ऐक्येऽपि दर्शितं सम्यक् प्रतीतिपरिशुद्धये ॥ १११ ॥
इत्थं संवेदनापेक्षा रूपे ज्ञप्तौ त्व सर्वथा ।
विश्वस्येति कथं पूर्वमुत्पत्तिरिति संश(ये ? यम्)॥ ११२ ॥
छेत्तुं व्योमेश्वरीचक्रं स्फुटमत्र प्रकाश्यते ।
निरावरणचित्सि(न्धौ ? न्धौ) स्फुरत्तासारसुन्दरम् ॥ ११३ ॥
परप्रकाशविश्रान्तिर्यत्र विश्राम्यति स्वयम् ।
तद्देवीरूपमत्रान्तः प्रथमस्पन्दनात्मना ॥ ११४ ॥
पञ्चाकाशमयं चक्रं विश्वबीजं तथोदितम् ।
सर्वापेक्षाविरहितं स्वोच्चलत्तास्वरूपकम् ॥ ११५ ॥
तत्रापि चान्यत् संवित्खमन्येषां नभसां परम् ।
तन्मयं च तदुत्तीर्णं व्यापकत्वेन वर्तते ॥ ११६ ॥
प्रथमप्रतिभारूपा व्योमेशी सेयमुच्यते ।
खेचर्यादिस्वरूपं यत् तदस्या एव जृम्भितम् ॥ ११७ ॥

प्रत्येकं सामरस्येन देवीपञ्चकमञ्चितम् ।
स्वातन्त्र्योल्लासकोद्रेकप्राधान्यात् पृथगुच्यते ॥ ११८ ॥
शब्दाद्यनुभवस्थाने संवित् स्पन्दादिरूपणी ।
प्रत्येकं सूक्ष्मया वृत्त्या स्वौचित्येनानुभूयते ॥ ११९ ॥
इत्थं प्रत्येकविषये पञ्चानुभवबृंहितम् ।
सामरस्यात्मना सर्वं देवीचक्रं प्रकाशते ॥ १२० ॥
एवं पञ्चात्मकं विश्वं सिद्धं स्वानुभवेन यत् ।
पञ्चाकाशतया पूर्वं तदुक्तं संविदात्मना ॥ १२१ ॥
परप्रकाशप्राधान्याच्चिदाद्यं शक्तिपञ्चकम् ।
परविश्रान्तिविश्रान्तिप्राधान्यात् त्विदमिष्यते ॥ १२२ ॥
व्यापकत्वं च नित्यत्वं पूर्णत्वं सर्ववेदिता(म?) ।
सर्वकर्तृत्वमित्येतत् शक्तिपञ्चकलक्षणम् ॥ १२३ ॥
स्वरूपलाभो विश्वस्य पूर्वं ज्ञप्तिस्ततः परम् ।
ज्ञानाधिकत्वात् सिद्धेस्तु स तु चिन्मात्रलक्षणः ॥ १२४ ॥
इत्थं विश्वस्य संस्थानं प्रथमं संविदात्मना ।
पश्चात्मकेन स्फुरितं परशक्तिस्वभावतः ॥ १२५ ॥
स्वप्रकाशात्मकानन्द(मू ? स्फू)र्तिबिन्दुक्रमात्मकः ।
चक्रपञ्चकविष्फारो व्योमेश्यादिमयः स्थितः ॥ १२६ ॥
अक्रमोऽपि क्रमात्मायमुपदेशभुवि स्थितः ।
तत्तत्प्रतीतिवैचित्र्यविभागप्रतिपादनात् ॥ १२७ ॥
तदेव संविदो रूपं पञ्चात्मत्वेन संस्फुरत् ।
सामरस्यात्मना पूर्वं व्योमेशीचक्रमुच्यते ॥ १२८ ॥

गुरोः स्वरूपमेतच्च सर्वावरणभेदकम् ।
परस्वरूपविश्रान्तिसमावेशनतत्परम् ॥ १२९ ॥
एतस्य ज्ञप्तिमात्रेण देहाद्यावरणक्षयः ।
पूजनेन तु संरूढिरतः पूज्यतमं हि तत् ॥ १३० ॥

निश्शेषविश्वविभवप्रतिपत्तिहेतु-
व्योमेश्वरीप्रथमचक्रनिरूपणेन ।
ल(ब्ध्वा ? ब्धा)वधानवशतः कृतिनो भजन्त
आद्यन्तवर्जितपदं परमात्मनिष्ठाः ॥ १३१ ॥

इति श्रीमहानयप्रकाशे व्योमेश्वरीचक्रनिरूपणं नाम
तृतीयोल्लासः ॥

---

## अथ चतुर्थ उल्लासः ।

नानानुभवविलासप्रसरणबी(जं ? ज)स्वरूपमविभिन्नम् ।
ज्ञात्वा स्वयुक्तिगर्भं प्रकाशचक्रक्रमं तनुमः ॥ १ ॥
पञ्चात्मकं स्वचक्रं यत् प्रथितं संविदात्मना ।
ज्ञानक्रियात्मकत्वेन प्रत्येकं तद् द्विधा मतम् ॥ २ ॥
बुद्धिकर्मेन्द्रियव्रातौ स्थितौ ज्ञानक्रियात्मना ।
दशधाप्यासिसारत्वात् तयोरपि परिस्फुटम् ॥ ३ ॥
आश्रये बुद्धिमनसी स्थिते सामान्यरूपतः ।
एवं द्वादशकं यत्र प्रकाशकलिलात्मकम् ॥ ४ ॥
अविभिन्नतयोत्पन्ननिर्विकल्पमथप्रथम् ।
प्रकाशचक्रपूज्यं + + + द्वादशधा स्थितम् ॥ ५ ॥

संवित्कदम्बक(ळ?गु)हास्थितं सिद्धनिषेवितम् ।
प्रकाशमात्रप्राधान्यादन्वर्थं नामतः स्थितम् ॥ ६ ॥
प्रमाणसृष्टिप्रवणा अत्र संविन्मरीचयः ।
अवधानघनै(र्ये?र्ज्ञे)या द्वादशात्मावशुद्धये ॥ ७ ॥
संमूर्च्छितप्रकाशात्मा मरीचीनामयं चयः ।
देशकालक्रियारूपकलासृष्टिलयावनिः ॥ ८ ॥
मासराश्यादिरूपोऽपि द्वादशात्मानुभूयते ।
कालक्रमो बहिस्तत्तद्भावभावकसंवृतः ॥ ९ ॥
प्रमाणसृष्टिसंर(भंलप?म्भलम्प)टासु मरीचिषु ।
बहिर्मुखाख्यहङ्कारो निलीनोऽत्र व्यवस्थितः ॥ १० ॥
अन्तःस्पन्दप्रधानत्वात् खे निरावरणात्मनि ।
चरन्त्या एव विष्फारः खेचर्या द्वादशात्मना ॥ ११ ॥
ज्ञानक्रियासामरस्यमयशक्तिस्वभाव(ख?तः) ।
(आ?तदा)कारमयत्वेन पूर्वं विश्रम्य सम्भवः ॥ १२ ॥
ततः प्रमाणरूपेण द्वादशात्मतयोदयः ।
ज्ञानक्रियासामर(स्यं?स्यात्)किञ्चिदुद्रेकलक्षणः ॥१३॥
अत्र दत्तावधानानां देशकालक्रियात्मनः ।
कालक्रमस्य सहसा ग्रासो भवति योगिनाम् ॥ १४ ॥
(स्व)भावावरकत्वेन ये लोकस्य व्यवस्थिताः ।
ज्ञानिनः स्वस्वरूपस्य विष्फारस्तैस्तु तन्यते ॥ १५ ॥
अतः कालक्रमस्यास्य द्वादशात्मा य उद्भवः ।
स एवं सन्निविष्टान्तत्(?)ग्रासेन सहसावनिः ॥ १६ ॥

इति कथितमुदारयुक्तियोगा-
दनुभवभूमिगतं प्रकाशचक्रम् ।
गुरुवरमुखसम्प्रदायगम्यं
परमसमाधिमतामतन्द्रितं स्यात् ॥ १७ ॥

इति श्रीमहानयप्रकाशे प्रकाशचक्रनिरूपणं नाम
चतुर्थोल्लासः ॥

---

## अथ पञ्चम उल्लासः ।

स्वात्मप्रमेयमयनिर्मितपूर्णभावा-
दिच्छानुरूपविभवेन समुल्लसन्त्यः ।
चिद्रश्मयो न च चमत्कृतयो हि यस्मि-
न्नानन्दचक्रमधुना तदिदं प्रवच्मः ॥ १ ॥

प्रकाशचक्रं यत् पूर्वं प्रमाणाद् विनिरूपितम् ।
विषयाभोगविभवा प्रसृतेच्छास्य (प्र?)पूर्यते ॥ २ ॥

तन्मात्राभूतरूपं च संविदाश्यानतामयम् ।
पञ्चात्मकं यद्विषय(स्व)रूपमनुभूयते ॥ ३ ॥

तत्र संविन्मरीचीनां बुद्धिकर्मेन्द्रियात्मनाम् ।
विषयाभोगनिर्ज्ञातनिर्विकल्पप्रतिष्ठिते ॥ ४ ॥

ऐकध्याद् बुद्धिमनसोर्य एकादशधोद्यमः ।
षोडशात्मा न सञ्जातो विषयाभोगपूरणात् ॥ ५ ॥

आनन्दचक्रं तदिदं षोडशात्मतया स्थितम् ।
निस्सीमनिजचमत्कारप्रमेयोल्लेखनक्षमम् ॥ ६ ॥

स्वस्वरूपापरित्यागात् प्रमेयीकरण हि यत् ।
स्वात्मनो दुर्घटैश्वर्यप्रतिपादनलक्षणम् ॥ ७ ॥
अनेन परिपूर्णत्वादिच्छाभोग्यस्य सर्वतः ।
महानन्दप्रधानत्वाच्चक्रमानन्दसंज्ञितम् ॥ ८ ॥
अत्रापि दत्तचित्ता ये भवन्ति ज्ञानशालिनः ।
विपया एव एतेषां भवेत् संवित्स्वरूपभूः ॥ ९ ॥
अत्र विश्वस्वरूपस्य सर्वाकारं समापनात् ।
चर्वणात्मापि संहारो नान्तरीयतयोदितः ॥ १० ॥
सामरस्यक्रियोद्रेकान्निष्पन्नेऽन्तर्जगद्भरे ।
विपयाभोग औत्सुक्य मरीचीना निवर्तते ॥ ११ ॥
चिच्छक्तिभूताया(मस्या)मिच्छात्मन्युदितो भुवि ।
चरन्त्या एव विस्फारो भूमय्याः पोडशात्मकः ॥ १२ ॥
आनन्दचक्रस्य यथोपपत्ति प्रदर्शित स्वानुभवस्वरूपम् ।
समाधिलाभाय सदैव भूयाद् भावोपभोगेन महाजनस्य
[ ॥ १३ ॥

इति श्रीमहानयप्रकाशे आनन्दचक्रनिरूपण नाम
पञ्चमोल्लास ॥

---

अथ षष्ठ उल्लासः ।

यत्रावृत्तिवशेन विश्वविभवोल्लासोपभोगात्मना
रश्मीना विलयो ह्यकृत्रिमतमेऽहङ्काररूपे भवेत् ।
तत्तत्कालकलाकलापकबलव्यापारपारङ्गम
ध्यात्वा सम्प्रति मूर्तिचक्रमुचित व्या न्यते (युक्तिभिः)
[ ॥ १ ॥

इति कथितमुदारयुक्तियोगा-

दनुभवभूमिगतं प्रकाशचक्रम् ।

गुरुवरमुखसम्प्रदायगम्यं

परममभाधिगतामतन्द्रितं स्यात् ॥ १७ ॥

इति श्रीमहानयप्रकाशे प्रकाशचक्रनिरूपणं नाम चतुर्थोल्लासः ॥

---

## अथ पञ्चम उल्लासः ।

स्वात्मप्रमेयमयनिर्मितपूर्णभावा-

दिच्छानुरूपविभवेन समुल्लसन्त्यः ।

चिद्रश्मयो न च चमत्कृतयो हि यस्मि-

न्नानन्दचक्रमधुना तदिदं प्रवच्मः ॥ १ ॥

प्रकाशचक्रं यत् पूर्वं प्रमाणाद् विनिरूपितम् ।

विषयाभोगविभवा प्रसृतेश्चास्य (प्र?) पूर्यते ॥ २ ॥

तन्मात्राभूतरूपं च संविदाद्यानतामयम् ।

पञ्चात्मकं यद्विषय(स्व)रूपमनुभूयते ॥ ३ ॥

तत्र संविन्मरीचीनां बुद्धिकर्मेन्द्रियात्मनाम् ।

विषयाभोगनिर्जातनिर्विकल्पप्रतिष्ठिते ॥ ४ ॥

ऐकध्याद् बुद्धिमनसोर्यं एकादशघोषमः ।

षोडशात्मा न सञ्जातो विषयाभोगपूरणात् ॥ ५ ॥

आनन्दचक्रं तदिदं षोडशात्मतया स्थितम् ।

निसर्गचिच्चमत्कारप्रमेयोल्लेखबन्धुरम् ॥ ६ ॥

स्वस्वरूपापरित्यागात् प्रमेयीकरणं हि यत् ।
स्वात्मनो दुर्घटैश्वर्यप्रतिपादनलक्षणम् ॥ ७ ॥
अनेन परिपूर्णत्वादिच्छाभोग्यस्य सर्वतः ।
महानन्दप्रधानत्वाच्चक्रमानन्दसंज्ञितम् ॥ ८ ॥
अत्रापि दत्तचित्ता ये भवन्ति ज्ञानशालिनः ।
विपया एव एतेपां भवेत् संवित्स्वरूपभूः ॥ ९ ॥
अत्र विश्वस्वरूपस्य सर्वाकारं समापनात् ।
चर्वणात्मापि संहारो नान्तरीयतयोदितः ॥ १० ॥
सामरस्यक्रियोद्रेकान्निष्पन्नेऽन्तर्जगद्भरे ।
विपयाभोग औत्सुक्यं मरीचीनां निवर्तते ॥ ११ ॥
चिच्छक्तिभूताया(मस्या)मिच्छात्मन्युदितो भुवि ।
चर्गन्त्या एव विष्फारो भूमय्याः पोडशात्मकः ॥ १२ ॥
आनन्दचक्रस्य यथोपपत्ति प्रदर्शितं स्वानुभवस्वरूपम् ।
समाधिलाभाय सदैव भूयाद् भावोपभोगेन महाजनस्य
[ ॥ १३ ॥

इति श्रीमहानयप्रकाशे आनन्दचक्रनिरूपणं नाम
पञ्चमोल्लासः ॥

---

अथ षष्ठ उल्लासः ।

आनन्दचक्रं यदिदं षोडशात्म निरूपितम् ।
विश्रान्तिरु(चिरा ? दिता) तस्य प्रत्यावृत्त्या प्रमातरि ॥ २ ॥
अतः प्रमातृरूपस्य मूर्तताऽत्रानुभूयते ।
अहङ्कारस्य सकलप्रयोगार्थदशात्मनः ॥ ३ ॥
बहिर्मुखमरीचीनां प्राधान्ये सति यो भवेत् ।
अव्यक्तरूपोऽहङ्कारः स मूर्तोऽत्र स्फुटं स्थितः ॥ ४ ॥
प्रमाणरूपः प्रथमं द्वादशात्मा यतः स्थितः ।
कालसृष्टिमयः (स्फुरा ? स्फारो) मरीचीनां चिदुत्कटः
[ ॥ ५ ॥
विषयाभोगरूपेण कामेनास्य प्रपूर्यते ।
बहिर्मुखे वा यदतः कालकामात्मकं जगत् ॥ ६ ॥
निष्पन्ने जगतो रूपे कालकामक्रमात्मके ।
विषयाभोगविस्फारविषण्णासु मरीचिषु ॥ ७ ॥
प्रत्यावृत्त्या स्वस्वरूपमेलनाभासतत्परः ।
सप्तदश(:) षोडशानां मरीचीनां विनायकः ॥ ८ ॥
प्रमातृरूपोऽहङ्कारो मूर्तत्वेन समुत्थितः ।
सप्तदशात्म तदिदं मूर्तिचक्रं विमृश्यताम् ॥ ९ ॥
कामोपभोगकालात्मग्राससाहसतत्परम् ।
तत्तत्प्रतीतिवैचित्र्यवासनालयभूमिगम् ॥ १० ॥
पूर्वं बहिर्मुखात्मा यो मरीचीनां चयो भवेत् ।
इदानीं स समापन्नो मातृमेलावभाजनम् ॥ ११ ॥
कालसृष्टिमयं (भा ? मा)नं मेयं कामक्रियात्मकम् ।
एतद्द्वयं यत्र लीनं सामरस्येन वर्तते ॥ १२ ॥

बीजभावात्मना सैषा कालग्रासप्रनालिका ।
(अव ? आवा)सनेन सहसा मूर्तिचक्रेऽनुभूयते ॥ १३ ॥
कालात् कामस्य विस्फारः कामात् कालस्तु वर्धते ।
इति विश्वक्रमे हेतू कालकामौ न तात्त्विकौ ॥ १४ ॥
कामात्मतां विना कालः कथं स्यात् कलनात्मकः ।
कलनात्मकतावर्ज्यं कथं कामस्य सम्भवः ॥ १५ ॥
(अतः) परस्परापेक्षौ कालकामौ न तात्त्विकौ ।
अकालकलिताद् रूपादकामाच्च समुत्थितौ ॥ १६ ॥
तयोः कवलनं यत्र प्रत्यावृत्त्या भवेत् स्फुटम् ।
तद् विश्वग्रासरसिकं स्वरूपं परमेशितुः ॥ १७ ॥
एतत्प्रमेयानुगमात् कालकाम(म)यं द्वयम् ।
बाह्यं ददाह शिखिनां स्थूलरूपधरो हरः ॥ १८ ॥
तदित्थं यो ह्यहङ्कारो निर्माता कालकामयोः ।
प्रत्यावृत्त्या स एवान्तः संहर्ता कालकामयोः ॥ १९ ॥
अहङ्कारस्य मूर्तत्वप्राधान्यान्मूर्तिसंज्ञितम् ।
चक्रं सप्तदशमयक्रममेलपसुन्दरम् ॥ २० ॥
सप्तादशाद् विचित्रत्वात् प्रतीतीनां स्वभावतः ।
नामसंस्थानयोर्भेदं प्रति चक्रं प्रवर्तते ॥ २१ ॥
स्वसिद्धरूपप्राधान्यात् तत्र सिद्धतया स्थि(तिः ? तेः) ।
निर्मेययोगतः शक्तेर्योगिनीत्वेन सम्भवः ॥ २२ ॥
परं रहस्यं कथितं किञ्चित् किञ्चित् क्वचित् क्वचित् ।
सर्वं सभयभीरुत्वान्नैकत्रैव प्रकाश्यते ॥ २३ ॥

महानयप्रकाशेऽस्मिन् ये पूर्वापरवेदिनः ।
हस्तामलकवत् तेषां वस्तुतत्त्वं प्रकाशते ॥ २४॥

इत्थं विश्वस्य संस्थानं प्रमात्रन्तं निरूपितम् ।
गुरुदृक्पातपात्राणां संशयत्रासविच्छिदे ॥ २५ ॥

यथाक्रमं मानमेयमातृरूपतया बहिः ।
खचक्रात् प्रसृतं विश्वं पराशक्तिस्वभावतः॥ २६॥

स्तोत्रकारस्यैवमेव स्थितं चेतसि यज्जगौ ।
संविस्तोत्रैः समालोकप्रमाणार्थप्रमात्(दः ? तः)॥ २७ ॥

प्रत्यावृत्त्या वितन्वत्याः संहारस्यापि भक्षणम् ।
देव्याः संहारभक्षिण्याः स्फार एष सुसङ्गतः ॥ २८ ॥

मूर्तिचक्रवरसम्प्रदायतः कालघट्टनमयी समन्ततः ।
संविदत्र परमार्थयोगिनां भासतामसमसाहसावनिः॥ २९॥

इति श्रीमहानयप्रकाशे मूर्तिचक्रनिरूपणं नाम
षष्ठोल्लासः ॥

---

## अथ सप्तम उल्लासः ।

अविकल्पविकल्पसंविदां सकलं वृन्दमनुज्झितक्रमम् ।
उदयादिम(या ?यं) यदन्तरे हठपाकेन गलत्यनारतम् ॥ १।

अनुभूय गुरुप्रसादतः परविश्रान्तिदशामनुत्तराम् ।
तदिदं समुदायपूर्वकं किल वृन्दक्रमचक्रमुच्यते ॥ २ ।

प्रत्यक्षानुभवं श्रित्वा भूतभावमयं जगत् ।
पीठक्रमदशा पूर्वं गुरुणा प्रतिपादितम् ॥ ३ ॥

अन्यहेतुनिरासेन तस्य मूलात् समुद्भवः ।
खचक्रात्मतयोन्मग्नः पञ्चात्माथ प्रकाशितः ॥ ४ ॥
स्वप्रकाशकरान्तस्थस्फुटज्ञानक्रियात्मकः ।
प्रमाणात्मा द्वादशधा ततोऽपि प्रतिपादितः ॥ ५ ॥
ततोऽपि दुर्घटैश्वर्यपारिपूर्ण्यचमत्कृतेः ।
आनन्दाख्यः षोडशधा प्रमेयात्मा निरूपितः ॥ ६ ॥
ततो बहिर्मुखैश्वर्यतृप्तेरुपरमे सति ।
स्वप्रतिष्ठतया सृष्टिसंहारात्मा व्यवस्थितः ॥ ७ ॥
प्रत्यावृत्त्यात्मतश्चापि यत्र सर्वं प्रलीयते ।
मातुः सप्तदशस्यास्य मूर्तत्वेन समुद्भवः ॥ ८ ॥
तदित्थं सर्वजन्तूनां व्यवहारदशाक्रमे ।
सिद्धोऽपि यो बहिर्भावः सर्वः सर्वविदात्मकः ॥ ९ ॥
मेयमानप्रमात्रात्म बहिः सिद्धमपीह यत् ।
तत् प्रकाशं विना सिध्येन्न कथञ्चन कस्यचित् ॥ १० ॥
अतः प्रकाशनिष्पत्त्या निष्पत्तिर्यस्यकस्यचित् ।
परस्यापरनिष्ठत्वाचत्यैक्यं चिज्जडात्मनोः ॥ ११ ॥
अतो यद् विश्ववैचित्र्यं जडात्मैवानुभूयते ।
स्वोल्लेखरेखासंस्थानं तत् स्वतन्त्रं चिदात्मकम् ॥ १२ ॥
पराकाशात् स्पन्दनत इच्छातोऽथ यथाक्रमम् ।
इन्द्रियद्वारतः पश्चाद् भावाभासः प्रवर्तते ॥ १३ ॥
बहिःसिद्धेऽपि विषये प्रमातृणां स्वभावतः ।
तदनु यावद् गुरुणा विश्वस्योदयसंस्थितिः ॥ १४ ॥

संहृतिः स्वस्वभावश्च स्वसाक्षित्वेन दर्शितः ।
अतः सर्वत्र चक्राणां स्वरूपप्रतिपादनम् ॥ १५ ॥
महानुभावाधिष्ठानात् सामरस्यं प्रवर्तते ।
आरघट्टघटीयन्त्रन्यायेनैतावतः सदा ॥ १६ ॥
जगतः सृष्टिसं(सा ? हा)रौ भावाभावमयौ स्थितौ ।
अने(क)क्रमयोगेनाप्याक्षि(ते ? से) ++ गोचरम् ॥ १७ ॥
विचित्रसृष्टिसंहारप्रबन्धः परिवर्तते ।
शून्यादारभ्य देहान्तं सङ्कोचात्मा हि योऽग्रतः ॥ १८ ॥
स संसारो विमुक्तिस्तु तत्स्वरूपविपर्ययः ।
तदत्र यावत् संसारस्तद्रूपतया स्थितः ॥ १९ ॥
+ + + समुद्दर्पाभ्यां सङ्कोचस्य व्यवस्थितेः ।
न भावत्यागतो मुक्तिर्नापि भावोपभोगतः ॥ २० ॥
भाव(नाशाल ? नालम्ब)नाच्चापि शून्यमात्रोपलम्भतः ॥
अनाग्रहादाग्रहाद्वा कस्यचिच्चापि तात्त्विकी ॥ २१ ॥
असङ्कोचापटात्मा सा विमुक्तिः पारमार्थिकी ॥
यदपेक्षावशात् सर्वाः संसारोन्या(?) विमुक्तयः ॥ २२ ॥
एतदात्मनि विश्वस्य स्वस्वरूपविलापनम् ।
सङ्कोचदलनाभ्यासाद् वासनालयभूमिगम् ॥ २३ ॥
निरावरणताहेतोरतस्तत्प्रतिपत्तये ।
वृन्दक्रमस्य संस्थानं कथ्यते गुर्वनुग्रहात् ॥ २४ ॥
स्वविमर्शप्रधानेनाप्याकालाग्नि शिवावधि ।
विश्वस्य भावः सहसा स्वस्वरूपे विचीयते ॥ २५ ॥

महानयमहायानवेदान्ताद्वयवादिनः ।
सदृशाः प्रतिपाद्यन्ते चार्वाकाद्वयवादिभिः ॥ २६ ॥
ये हस्तिमशकन्यायादर्थादर्थास्तु भेदिनः ।
तैर्जडा विप्रलभ्यन्ते सदृशैरभि(सायतै? धायकैः)ः ॥ २७ ॥
अतो नास्तिकतातत्त्वं चित्ते कृत्वा दुरात्मभिः ।
महानयोपदेशेन पात्यते स्वपरावधः ॥ २८ ॥
सर्वोत्कृष्टस्वभावस्य शिवस्यापि महात्मनः ।
स्थितः सङ्कोचसंस्कारः का कथान्येषु जन्तुषु ॥ २९ ॥
अतो नित्यावधानेन स्वस्वरूपमयस्थितेः ।
सर्वाग्रहग्राह्यवशाज्जीवन्मुक्तिः प्रकाशते ॥ ३० ॥
तच्चावधानं विषयिस्वरूपपरिशीलनात् ।
अविकल्पविकल्पात्मस्थैर्यरूपतया पुनः ॥ ३१ ॥
विकल्पशृङ्खलाबद्धो हेतुकार्यात्मको हि यः ।
नानाविधाग्रहग्रन्थिवासनावेध(ज? घ्नं)हितः ॥ ३२ ॥
न शक्योऽसावपह्नोतुं किल प्रत्यात्मवेदनात् ।
अतः संहाररूपोऽयं ++++विना कथम् ॥ ३३ ॥
सहसा ग्रसितुं शक्यः संवादैरेव पेशलैः ।
तस्मात् स्वरूपदार्ढ्येन सर्वावरणभेदिना ॥ ३४ ॥
परावधानरूपेण स्थातव्यं परयोगिना ।
अतो विश्वस्य संस्थाने यन्मुखेन यदागतम् ॥ ३५ ॥
सन्मुखेनैव तत् तस्य हठपाकेन लीयते ।
विश्वं प्रकाशाधीनत्वात् तन्मयत्वाच्च वस्तुतः ॥ ३६ ॥

संवित्स्वरसत्वाहित्वाच्छून्यं स्थापयितुं यथा ।
तथैव हठपाकेन प्रत्यावृत्तिक्रमात्मना ॥ ३७ ॥

निरावरणतां नेतुं शक्यं संस्थानशीलनात् ।
एतस्मिन् विदिते सम्यङ्मुक्तिः संसारभूमि(नाम् ? तः)
[ ॥ ३८ ॥

अन्यथा मुक्तिरूपं तु संसारस्यापरो विधिः ।
यथास्थितस्य विश्वस्य यथैवानुभवे स्थिते ॥ ३९ ॥

सङ्कोचसंस्थानलयाज्जीवन्मुक्तिः प्रकाशते ।
यथैव पश्यन्ति विश्वं तथैव परिवर्तते ॥ ४० ॥

संवित्स्वातन्त्र्यतस्त्यक्तसर्वोपायकदर्थनम् ।
अतो विमर्शरूपोऽस्य कथनात्मा प्रकाशते ॥ ४१ ॥

सत्सम्प्रदायो गुरुणा सर्वावरणभेदकः ।
मूर्तिचक्रे ह्यहङ्कारः प्रमात्रात्मा य उत्थितः ॥ ४२ ॥

स्वात्मसङ्कोचसंहारपूर्वं स हठपाकतः ।
भावसंस्काररूपस्य रश्मिवृन्दस्य सर्वतः ॥ ४३ ॥

तिष्ठतो बीजभावेन मा(त्र ? तृ)मेलापरूपिणः ।
निर्विकल्पविकल्पांशान् भावाभावद्वयानुगान् ॥ ४४ ॥

विनिर्भिद्य विनिर्भिद्य संहरत्यान्तरानपि ।
निर्विकल्पविकल्पांशाः प्रायः सङ्कलनावशात् ॥ ४५ ॥

सम्भवन्ति चतुष्षष्टिः प्रतीतीनां स्वभावतः ।
तत्रापि ज्ञेयसंस्काराभिज्ञरूपाः प्रतीतयः ॥ ४६ ॥

सम्भवन्ति चतुष्षष्टिः सोपानक्रमयोगतः ।
अन्या अपिच तन्निष्ठा हठपाकैकलम्पटाः ॥ ४७ ॥

ज्ञातृभोगस्वरूपिण्यस्तत्संख्या एव वस्तुतः ।
ज्ञातृभोगस्वरूपाणां मरीचीनां कदम्बकम् ॥ ४८ ॥

प्रत्येकं हठपाकेन ग्रसितुं तत्र वर्तते ।
तच्च स्फुटास्फुटत्वेन वर्ततेऽनुभवादपि ॥ ४९ ॥

ज्ञे(यं ? य)संस्काररूपाणां प्रतीतीनामनुक्रमात् ।
आसां सर्वप्रतीतीनां परविश्रान्तिलक्षणम् ॥ ५० ॥

न क्षणं च्यवते रूपं यस्याः सा पारमार्थिकी ।
सर्वोत्तीर्णा सर्वमयी सर्वसर्वात्मकप्रथा ॥ ५१ ॥

अविभिन्ना विभिन्नेव या काचित् पारमेश्वरी ।
व्यपदेशातिगा तस्याः स्वस्वरूपमयस्थितेः ॥ ५२ ॥

पञ्चषष्टिप्रतीतित्वमुपचारेण गीयते ।
रौद्रेश्वर्या अयं स्फारः प्राधान्येन व्यवस्थितः ॥ ५३ ॥

संस्कारहठपाकात्मा ग्रासव्यापारपारगः ।
संहारभक्षिणीरूपाद् व्योमेश्यन्तं हि यत् स्थितम् ॥ ५४ ॥

चक्रसंस्थानमेतस्य निजचक्रक्रमान्तरे ।
निर्विभज्य स्वकं रूपं हठपाकक्रियात्म(कः ? कम्) ॥ ५५ ॥

प्रत्यावृत्त्या स्वस्वरूपे निरावरणसुन्दरे ।
इच्छासंस्कारविरहे क्षीणा विश्राम्यति स्वतः ॥ ५६ ॥

परधारासमारूढसामरस्यावसानभूः ।
एषा कृशतनुर्देवी सर्वेच्छाविलयावनिः ॥ ५७ ॥

अनपायपदप्राप्त्यै कैश्चिदेवाभ्युपास्यते ।
या (या) स्वचक्रे चक्रेशी तां तामाविश्य युक्तितः ॥ ५८ ॥

रौद्रेश्वरी सर्वचक्राण्यामूलाद् ग्रसति स्वयम् ।
अतो वृन्दक्रमे सर्वमुपादेयतया स्थितम् ॥ ५९ ॥
प्रमेयजातं सङ्कोचकलाविच्छेदनक्षमम् ।
मुद्रामन्त्रनिरीहादिप्रमेयप्रतिपादनात् ॥ ६० ॥
कथनात्मा सम्प्रदायो निष्ठामत्र परां गतः ।
कथनात् संशयच्छेदः पूजनं परिपूर्णता ॥ ६१ ॥
सङ्क्रमात् सामरस्यस्य परा निष्ठा प्रवर्तते ।
अतोऽत्र सावधानेन हृदयेन विमृश्यताम् ॥ ६२ ॥
चतुष्षष्टिमरीचीनां संस्थानं हृदयङ्गमम् ।
प्रत्यक्षा(नुभ)वात् सर्वं स्वात्मा भवति योगिनाम् ॥ ६३ ॥
अतो गुरुमुखात् तद्यत् प्रत्यक्षेणानुभूयते ।
विषयाभोगसंस्काररूपो यः कामसम्भवः ॥ ६४ ॥
कालेनासाद्यते भूयः स तद् बीजक्रमात्मना ।
तद्भोगेनापि कालस्य वृत्तेरुपरमे सति ॥ ६५ ॥
यथाक्रमं स्वस्वरूपहानिः संजायते स्फुटम् ।
तदित्थं प्रथमः कालः कामं सृष्ट्वा ततः क्रमात् ॥ ६६ ॥
प्रत्यावृत्त्या तु तद्ग्रासात् स्वं स्वं रूपं ग्रसत्यपि ।
तदेतद् वस्तुतः सर्वं मरीचीनां विजृम्भितम् ॥ ६७ ॥
अक्रमाणां क्रमाभासरूपमप्रत्यक्षतः स्थितम् ।
तत्र कालस्य या सृष्टिर्द्वादशात्मा निरूपिता ॥ ६८ ॥
प्रत्यावृत्तिक्रमोन्माना मूर्ताहङ्कारमेलनात् ।
त्रयोदशात्मतां प्राप्ता सा विश्रान्तिपदोन्मुखी ॥ ६९ ॥

त्रयोदशानां रूपाणां प्रत्येकमुदयादिभिः ।
पञ्चात्मिका पञ्चषष्टिस्तत एता मरीचयः ॥ ७० ॥
अन्त्या क्रमाक्रमोत्क्रान्त्या विश्रान्तिरिति गीयते ।
चतुष्षष्टिमरीचीनां सामरस्यात्रसानभूः ॥ ७१ ॥
उदयादिमयोल्लासद्वादशात्ममरीचयः ।
तन्मयोल्लासपरमाहङ्कारानुगमूर्च्छयः ॥ ७२ ॥
प्रतिभावं प्रवर्तन्ते हठग्रसनलम्पटाः ।
भावानुभवभूमौ हि स्तिमितित्यन्तरात्मनि ॥ ७३ ॥
सर्वेन्द्रियमरीचीनां चक्रं युगपदुल्लसेत् ।
यस्या यस्या यत्र यत्र रूपादावविकारिता ॥ ७४ ॥
तस्यास्तस्यास्तत्र तत्र स्वोद्रेकः केवलं स्थितः ।
तद्विलीनत्वमन्यासामित्येकोऽनुभवो नचेत् ॥ ७५ ॥
कथं स्याद्रूपलावण्यविकासाद्यपरस्त्रियाम् ।
अभिलापस्तथाश्लेष प्रायः स्पर्शेन्द्रियात्मकः ॥ ७६ ॥
नचात्र रूपलावण्यविलासः स्पर्शनात्मकः ।
एवं वचनमाधुर्यं तथाङ्गश्वाससौरभम् ॥ ७७ ॥
अधरामृतपानं च सर्वं स्यात् तच्च निष्फलम् ।
तदित्थं सर्वरश्मीनां सर्वसर्वात्मतामयम् ॥ ७८ ॥
प्रमातृपरितोषात्मसामरस्यव्यवस्थितम् ।
स एष परमो वीरः पराहङ्कारलक्षणः ॥ ७९ ॥
युगपत् सर्वरश्मीनां परं द्रावणलक्षणम् ।
आश्रयाणां समासाद्य सामरस्येन वर्तते ॥ ८० ॥

चक्रेश्वरः स एवायमाद्ययागादनन्तरम्।
चतुष्षष्टिमयेनान्तः शक्तिचक्रेण सङ्गतः॥ ८१॥
निर्विकल्पविकल्पात्मसंस्कारान् पशुरूपिणः।
गगलनक्षमा ततोऽपि परिविश्रामविलीना(?)॥ ८२॥
हठेनाहन्ति रभसात् स्वचक्रपरितृप्तये।
मध्ये च पर(मा)मोदचमत्काररसात्मिका॥ ८३॥
मदिरा जृम्भते कापि विमस+कलक्रियः।
कान्दिशीकत्वमायाति परशक्ताव(त्सा? सा)वपि॥ ८४॥
वीरसिंहासनस्थेयं दे(र्यो? वी) परममङ्गला(म?)।
चलनान्मोहरूपस्य क्रमणात् परसंविदः॥ ८५॥
गुरुः सकलचक्राणां क्रमाक्रमपदोज्झितः।
द(द्योगातिक? द्योतातिक्र)(म)श्चापि द्वैविध्येन व्यव-
[स्थितः॥ ८६॥
पराकाशस्पन्दनेच्छादृक्क्रियात्मा बहिर्मुखः।
एकरतद्व्युक्रमात्मान्यः पराकाशप्रतिष्ठितः॥ ८७॥
बहिर्मुखत्वेऽपीच्छातश्चर्वणं तत्त्वयात्मनः।
कामसंसर्गतस्तस्य प्रत्यावृत्त्या(त्म?)समन्ततः॥ ८८॥
ज्ञानक्रियातः कालस्य ग्रासो विश्रान्तिरप्य(थ)।
विषयाभोगनिर्ज्ञातानिर्विकल्पेऽपि यत् स्फुटम्॥ ८९॥
कालग्रसनविश्रान्ती सर्वेषां भवतः क्षणम्।
अन्तर्मुखत्वे तूद्द्योताद् भासामर्शक्रियात्मकात्॥ ९०॥
आरभ्य चिति विश्रान्तिपर्यन्तं पञ्चकं स्थितम्।
एवं बहिर्मुखाभावावसरे ह्युदयादिकम्॥ ९१॥

व्योमेश्वरीक्रमाद् यावद् रौद्रेशीपञ्चकं स्थितम् ।
(तद्) बहिर्विश्वमाश्रित्य + + + थ क्रियात्मनः ॥ ९२ ॥
विमर्शात् परमाकाशपर्यन्तमपि तत् स्थितम् ।
+ + + + + समाश्रित्य पूर्वं पीठक्रमात्मना ॥ ९३ ॥
यागादिभेदरूपेण तज्ज्ञप्तिर्गुरुणा कृता ।
ततो विश्वस्य संस्थानमामूलात् प्रतिपादितम् ॥ ९४ ॥
मानमेयप्रमात्रात्ममूर्तिचक्रान्तमित्यतः ।
इदानीं येन रूपेण सर्वाकारं विलीयते ॥ ९५ ॥
यथास्थितक्रमेणैव तद् वृन्दं प्रतिपाद्यते ।
सामरस्ये प्रवृत्तेऽपि ज्ञानमेलावलक्षणे ॥ ९६ ॥
वासनाविधसंस्काराः कालग्रासेऽपि यत् स्थिताः ।
अतः क्रियां विना तेषां न(हि) निर्हरणं भवेत् ॥ ९७ ॥
चिद्विमर्शस्वरूपेण स्वात्मयागमयात्मना ।
अलं ग्रासप्रवृत्तेन क्रियावेशेन तत्त्वतः ॥ ९८ ॥
भूय उन्मज्जनं न स्यादेषामिति विशेषतः ।
रौद्रेश्वरीमयः स्फारः परानुग्रहभूमिकः ॥ ९९ ॥
मिथ्या(त्रि ? भि)मानरूपो यः संसारोऽत्र विलीयते ।
निरसंस्कारप्रकाशात्मा पराशक्तिः प्रवर्तते ॥ १०० ॥
अस्या एव ततो देव्या अपि प्राधान्यमिष्यते ।
निराधार(णं ? णता) यस्मादतः सञ्जायते स्फुटम् ॥ १०१ ॥
पूर्वं या ज्ञेयसंस्कारभित्तिरूपाः प्रतीतयः ।
सोपानक्रमरूपेण चतुष्षष्टिर्निरूपिताः ॥ १०२ ॥

स्वचक्रे पशुरूपाणां तासां धामत्रयात्मनाम् ।
चिद्विमर्शस्वरूपेण हठपाकेन गालनम् ॥ १०३ ॥
क्रियते चरुचर्यादिप्रक्रमानुभवात् स्थिर(ः ? म्) ।
तत्र रौद्रेश्वरीरूपं प्रथमं षोडशात्मनः ॥ १०४ ॥
मेयसंस्कारचक्रस्य विषयाभोगरूपिणः ।
निरावरणतां नेतुं प्रवृत्तं चिद्विमर्श(क ? त)ः ॥ १०५ ॥
कामस्वरूपमामूलादत्र ग्रस्तं समन्ततः ।
अहङ्कारेण सिद्धत्वं श्रित्वा तत्तन्मरीचिनाम् ॥ १०६ ॥
संहारभक्षिणीरूपं ज्ञानं सिद्धमयात्मताम् ।
आविश्य मेयसंस्कारचक्रं तत्र प्रलीयते ॥ १०७ ॥
ततः कालस्वभावस्य द्वादशात्ममयस्थितेः ।
मानसंस्कारचक्रस्य प्रत्यावृत्तिक्रमात्मनः ॥ १०८ ॥
अविकल्पविकल्पाभ्यां चतुर्विंशतिरूपतः ।
मननत्राणधर्माभ्यां मन्त्रसिद्धमयात्म(ना ? ता)म् ॥ १०९ ॥
आविश्य तत्स्वरूपस्य विकल्पोपक्रमो लयः ।
भूचरीरूपमाविश्य क्रियतेऽनुभवात्मना ॥ ११० ॥
ततो विकल्परूपस्य निर्विकल्पप्रतिष्ठितेः ।
मेलापसिद्धतां श्रित्वा कालग्रासो हि तन्यते ॥ १११ ॥
द्वादशात्मक्रमोन्मग्नमेलापानन्तरं ततः ।
तन्मात्ररूपसंस्कारास्तथान्तःकरणत्रयम् ॥ ११२ ॥
अष्टाविह विशिष्यन्ते शाक्ता अव्यक्तमूर्तयः ।
तद्विनिर्हरणाद्युक्तं शाक्तमष्टात्मकं हठात् ॥ ११३ ॥

खेचरीरूपमाविश्य सूक्ष्मकालांशभेद(कः ? कम्) ।
सूक्ष्मेक्षिताप्रकारेण परं तन्मात्ररूपिणः ॥ ११४ ॥
एकस्य कामसंस्कारवेधस्याप्य(न्ति ? स्ति) संभवः ।
तथैव चान्तःकरणत्रयसंस्कारभूमिगः ॥ ११५ ॥
अनुवेधोऽस्ति यस्याप्युद्युगाप्यत्र संलयः (?) ।
चक्ररूपं शाम्भवं + तच्चक्रं क्रमतः स्थितम् ॥ ११६ ॥
श्रेयसः पररूपस्य शंस्वभावतया यतः ।
भवनं शाम्भवं तेन चक्रमेतत् प्रकीर्तितम् ॥ ११७ ॥
व्योमेश्वरी स्वस्वरूपे प्रत्यावृत्तिक्रमात्मना ।
रौद्रेशीरूपमाविश्य कालग्रासादनन्तरम् ॥ ११८ ॥
स्वकृत्यं सकलं कृत्वा सम्यग् विश्राम्यति स्वतः ।
तदत्र सर्वसंस्कारचक्रमक्रमरूपिणा ॥ ११९ ॥
ज्ञातृभोगस्वरूपेण चतुष्षष्टिमयात्मना ।
स्फुटास्फुटत्वभिन्नेन मेयाभ्यासाद् यथायथम् ॥ १२० ॥
मेयमानप्रमातृत्वं विचित्रक्रमरूपतः ।
चतुष्षष्टिमयं मेयं मर्वाका(रं) रसि(स्य ? ष्य)ते ॥ १२१ ॥
मुद्रामन्त्रात्मकोऽत्रैव सम्प्रदायोऽनुवर्तते ।
प्रसङ्गादिह तस्यापि स्वरूपं प्रतिपाद्यते ॥ १२२ ॥
स्वरूपज्ञापनारूपं मुद्रासंस्थानमिष्यते ।
स्वविमर्शात्मना त्राणमिष्यते मन्त्रलक्षणम् ॥ १२३ ॥
नानानुभवरूपासु व्यवहारदशास्वपि ।
एतद् द्वयं ख्यातिसारं स्फुटं प्रत्यक्षतः स्थितम् ॥ १२४ ॥

अद्याप्यभिन्नरूपत्वात् परोक्षमिव वर्तते
यत्परिज्ञानवशतो भवो भवति मुक्तिभूः ॥ १२५ ॥
मुद्रामन्त्रौ बिन्दुनादौ निरीहात्मा तदाश्रयः।
अविभागेन वर्तन्ते सर्वानुभवभूमिषु ॥ १२६ ॥
करङ्किणी क्रोधिनी च भैरवी लेलिहानिका।
खेचरी चेति मुद्रायाः पञ्चात्मकतया स्थितिः ॥ १२७ ॥
यो ज्ञानमन्त्रमेलावशाक्तशाम्भवभेदतः।
क्रमस्तस्य यथासंख्यमेताभिः सर्वथान्वयः ॥ १२८ ॥
मुद्रामन्त्रनिरीहाणां धामवर्णचिदात्मनाम्।
अन्योन्याव्यभिचारेण सामरस्यादभिन्नता ॥ १२९ ॥
क्रमे सर्वज्ञपर्यन्तं प्रत्यक्षा कापि या स्थिता।
यत्परिज्ञानवशतः कायवाङ्मनसाश्रयम् ॥ १३० ॥
सङ्कोचसंस्कारलयात् सर्वाकारं विशुध्यते।
आणवादिसमावेशत्रयव्यापकरूपता ॥ १३१ ॥
यत्रापि भिन्नानुभवात् स्वरूपस्थितये भवेत्।
यादिकर्मादिकल्म(?)त्रयमक्रमतो लयम ॥ १३२ ॥
यत्प्रसादेन यत्स्फारात् व्युत्थते कालघट्टनम्।
इच्छानिर्हरणात् सूक्ष्माकालाग्नि शिवावधि ॥ १३३ ॥
भेयमद्याप्यनुन्मग्नप्रथाकथनरूपतः।
केषाञ्चिदेव सङ्क्रान्ता मुखान्मुखमनुक्रमात् ॥ १३४ ॥
महार्थकथनं यस्या विना यादृशतादृशम्।
यां विनापि नयस्यास्य वैलक्षण्यं न जायते ॥ १३५ ॥

सैषा रहस्यरूपत्वान्मुखाम्नायैकगोचरा ।
लिपौ पातयितुं शक्त्या न सम्यग्वदते मना(क्) ॥ १३६ ॥
(क)टाक्षीक्रियते बुद्धौ तज्ज्ञानं सूक्ष्मदर्शिनाम् ।
प्रत्यक्षानुभवादस्या भेदग्रासो हि यत्नतः ॥ १३७ ॥
श्रवर्णाकारसंस्थानां प्रमातॄणां स्वभावतः ।
अपटाटङ्कसङ्केतात् कायसंस्थानतः स्थि(तम्? ता)
[॥ १३८ ॥
कायसंस्थानरूपा च मुद्रा सार्वत्रिकी मता ।
करङ्कानुभवात्मत्वात् प्रथमं सा(रकि? करं)किणी ॥ १३९ ॥
ततः करङ्करूपस्य स्वात्मन्याधारतावशात् ।
संरभात् क्रोधिनीरूपमसावाश्रित्य वर्तते ॥ १४० ॥
ततोऽपि तत्स्वरूपस्य सान्तर्विपरिवर्तिनः ।
यथायथं सम्भरणाद् भैरवीति प्रकीर्तिता ॥ १४१ ॥
ततोऽपि वासनारूपपुर्यष्टकविलापनात् ।
महाविलयरूपत्वाल्लेलिहानेति कथ्यते ॥ १४२ ॥
ततश्चापि (स्व)स्वरूपे प्रतिष्ठामभ्युपेयुषि ।
निरावरणरूपत्वात् खेचरीरूपमास्थिता ॥ १४३ ॥
इयं सा परमा मुद्रा ह्यापातालाच्छिवावधि ।
तर्पयित्वा जगत्कृत्स्नं निजसंस्थानतः स्थिता ॥ १४४ ॥
एवंविधं हि यत् स्थानं जङ्गमस्थावरात्मकम् ।
वाचकात्मस्वरूपान्तरध्यस्तं मन्त्ररूपतः ॥ १४५ ॥
आपादने परामर्शात् स्वरूपत्राणयोगतः ।
अवर्णमयवाक् कल्प + + कारतया स्थितः ॥ १४६ ॥

अवर्णादिमा महामन्त्रो विश्वावरणतत्परः ।
निजस्वरूपटङ्कान्तपञ्चमुद्रात्मकं जगत् ॥ १४७ ॥

आकृष्य घट्टयत्युच्चैरनाहतहतोज्झितः ।
भेदप्रपञ्चोपशमः परामर्शान्तकोटि(शः ? गः) ॥ १४८ ॥

एतद् द्वयं संविदन्तः सामरस्यतया स्थितम् ।
निरीहरूपे विश्रान्तिः परविश्रान्तिलक्षणे ॥ १४९ ॥

वाच्यवाचकसंस्थानं वस्तुतः संविदेव हि ।
निरावरणता यस्मात् स्थिता तत्रापि वस्तुतः ॥ १५० ॥

परस्परापेक्षतया कालकामौ न तात्त्विकौ ।
नचापि न स्थितौ यस्मात् प्रतीतिपथि वर्तते ॥ १५१ ॥

निरावरणत्वञ्चि तदेवचितो यथा (?) ।
स्वसंवेदनसंसिद्धं तद्वदेवानयोर्न किम् ॥ १५२ ॥

आसुखाद् भासमानं तु यद्रूपमनयोः स्थितम् ।
केशोण्डुकाभाससमं तन्निरावरणं पुनः ॥ १५३ ॥

अपरामर्शदोषेण केवलं ह्यनयोः स्थितिः ।
परामर्शः पुनर्देवी परानुग्रहभूमिका ॥ १५४ ॥

परामर्शे प्रवृत्ते तु शालनं यदि वा स्थितिः ।
अनयोः समतामेति योगिनः प्रति वस्तुतः ॥ १५५ ॥

एतद्रूपपरिज्ञानद्वयघट्टनसम्भवा ।
निरीहात्मा संविदेव प्रथतेऽनुपयोगिनः ॥ १५६ ॥

मुद्रामन्त्रनिरीहाणां धामवर्णचिदात्मनाम् ।
ऐकध्यमनया भङ्ग्या प्रतिभावं व्यवस्थितम् ॥ १५७ ॥
मुद्रा स्वरूपकथनं मन्त्ररूपं च पूजनम् ।
संक्राम(श्च ? श्च) निरीहात्मा त्रयमेकतयाप्यदः ॥ १५८ ॥
पञ्चशून्यात्मकाकाशपिण्डरूपतया विभुः ।
संवित्संस्थानमाश्रि(त्य?त्या)त्रर्णा(त्मा)जो विराजते॥१५९॥
षोडशस्वररूपत्वमस्यान्तः प्रकटं स्थितम् ।
अपटाटङ्कसङ्केतात् केवलं न विभाव्यते ॥ १६० ॥
एतत्प्रभावाद् व्युत्थाने समाधिर्योगिनां भवेत् ।
अनुकार्यानुकरणसमानप्रतिपत्तितः ॥ १६१ ॥
एकस्वभा(वः ? वा) सर्वासु लिपिष्वेव विभुस्थितिः ।
अन्ये वर्णा विभिद्यन्ते यथा नायं पुनस्तथा ॥ १६२ ॥
एकस्वरूपं मुद्रायाः करङ्कात्मतया स्थितम् ।
आक्षितेः शिवपर्यन्तं महासामान्यलक्षणम् ॥ १६३ ॥
तथैव वर्णराजस्य महामन्त्रस्वरूपि(णिम् ? णः) ।
सर्ववाचकसामान्यध्वनिरूपतया स्थितम् ॥ १६४ ॥
तथा खचक्ररूपायाः संविदोऽनुगमः स्थितः ।
निरीहात्मतयाप्येतद्द्वयविश्रान्तिलक्षणः ॥ १६५ ॥
तदिदं धारणाध्यानसमाधीनां स्वभावतः ।
व्युत्थानेऽपि स्थितं साक्षात् त्रयमेकत्र संयमः ॥ १६६ ॥
एतत्परिज्ञानवशाद् विक्षेपो नास्ति वस्तुतः ।
एतद्रूपापरिज्ञानात् का न विक्षेपभूमयः ॥ १६७ ॥

तदेतत् परमं गुह्यं योगिनीनां मुखे स्थितम् ।
मुखागमस्लानभयादुद्धाट्य प्रतिपादितम् ॥ १६८ ॥
एतत्प्रकटनाज्जातो योऽपराधो महान् मम ।
मरीचिमण्डलं तन्मे क्षम्यतां गुर्वनुग्रहात् ॥ १६९ ॥
पण्डपिण्डस्वरूपस्य सूक्ष्मप्राणक्रमात्मनः ।
अस्यैव वर्णराजस्य लिपिसंस्थानमन्यथा ॥ १७० ॥
आश्रित्य परमा संवि(न्म ? न्मु)ण्डदण्डतया स्थिता ।
हृत्संविदुत्थरूपाया वर्णारणिमयात्मनः ॥ १७१ ॥
ध्वनन्त्याः परमं नादं महासामान्यवाचकम् ।
अधःकुण्डलिनीस्रोतोमहावर्तफणाहृतेः ॥ १७२ ॥
स्वरफा(रा ? र)ध्मानरूपस्य निष्पत्त्या रचितास्थितेः ।
प्रत्यावृत्त्या तु यद्धाममेयसंहरणात्मनः ॥ १७३ ॥
अभाकलान्तं पश्यन्त्यास्ततोऽपि परमे पदे ।
बिन्दुशून्यात्मनि स्थानाच्छिरावरणता ततः ॥ १७४ ॥
मुण्डनं ज्ञानरूपेण दण्डनं च क्रियात्मना ।
मुण्डदण्डक्रमौ तेन मतौ ज्ञानक्रियात्मकौ ॥ १७५ ॥
शिरःप्रदेशे मुण्डात्मा ज्ञानेन्द्रियमयाश्रयः ।
कर्मेन्द्रियस्फारम(यो ? यो) दण्डात्मा तु ततोऽपरः ॥ १७६ ॥
आद्यो व्योमेश्वरीस्पन्दरूपो वि(श्व ? श्वो)दयोन्मुखः ।
अन्यो रौद्रेश्वरीस्फारमयो विश्वविलापकः ॥ १७७ ॥
कस्यापि पिण्डनाथस्य देहसंस्थानरूपिणी ।
व्याप्तिसारा स्थिता मुद्रा पञ्चप्राणक्रियात्मिका ॥ १७८ ॥

सूक्ष्मप्राणक्रमोल्लासपिण्डनाथानुसन्धितः ।
महाप्रभावाज्जायन्ते योगिनामक्रमोदयाः ॥ १७९ ॥

प्रत्यक्षानुभवात् सोऽयमुत्तमः पिण्डवर्णराट् ।
योगिनां मु(द्य ? ख्य)विश्रान्तिश्चिदानन्दाय कल्पते ॥

परस्थूलक्रमौ प्रायो व्याप्तिसारौ व्यवस्थितौ ।
सूक्ष्मक्रमप्रभावानामाकारो योगिनां मतः ॥ १८१ ॥

अतोऽत्र पिण्डनाथस्याप्युपयोगो व्यवस्थितः ।
धामवर्णचिदैकाग्र्यमस्याप्यनुभवस्थितम् ॥ १८२ ॥

आलिङ्ग्य (कां ? कार्यं) ग्रसितुं यदा कालः प्रवर्तते ।
तदा भोगविनाशाय तदा कालो(त्रि ? पि) कल्प्यते ॥

वाच्यवाचकविच्छेदमयप्राणक्रमात्मना ।
अक्रमोच्चाररूपेण चित्प्रकाशः प्रकाशते ॥ १८४ ॥

अक्रमोच्चाररूपस्य क्रमात्मायं व्यवस्थितः ।
अदूरविप्रकर्षेण सामान्यात्मतया पुनः ॥ १८५ ॥

इत्थं स्वानुभवं त्यक्त्वा ये सङ्ख्यामात्रपूरणात् ।
यथाकथञ्चिच्चक्राणां ग्रन्थ्याधारकलादिभिः ॥ १८६ ॥

वर्णक्रमान्त्यैरन्यैश्च प्रकारैरसमञ्जसैः ।
स्वरूपं बोधयन्त्युच्चैः (के ? ते)ऽपि (न) ज्ञानशालिनः ॥

नातः क्रमादयोऽप्यत्र ये तज्ज्ञैः प्रतिपादिताः ।
अनयत्वात् प्रपञ्चस्य नास्माभिस्ते प्रपञ्चिताः
[ ॥ १८८ ॥

आमूलादिलसति शाकिनीक्रमेऽस्मिन्
शक्ता + ङ्गलितसंशयोदयो यः ।

भव्यानामनुभवनिष्ठसम्प्रदायः
स्वानन्दामृतरसतृप्तये स भूयात् ॥ १८९ ॥

इति श्रीमहानयप्रकाशे वृन्दचक्रनिरूपणं नाम सप्तमोल्लासः ॥

---

## अथाष्टम उल्लासः ।

स्वात्मज्ञानप्रवणं महाप्रभावप्रवर्तनोपायम् ।
सृष्टिस्थितिसंहारस्वरूपनिष्ठक्रमं तनुमः ॥ १ ॥

प्रत्यभिज्ञागम्यरूपप्रथनात्मगुरूदयः ।
वृन्दक्रमान्तैः स्फुरितः सर्वसंशयभेदकः ॥ २ ॥

अतो वृन्दक्रमस्यान्ते पूज्यते गुरुसन्ततिः ।
आत्मरूपपरिज्ञाने परानुग्रहकारिणी ॥ ३ ॥

अत आत्मपरिज्ञाने सम्पन्ने निर्विकल्पकः ।
विकल्पवासनाविद्धः पूजनात्मा प्रवर्तते ॥ ४ ।

पूजा नाम न पुष्पाद्यैर्या मतिः क्रियते दृढा ।
निर्विकल्पे महाव्योम्नि सा पूजा ह्यादराल्लया ॥ ५ ॥

इति पूजास्वरूपस्य तत्त्वतः प्रतिपादनात् ।
स्वसङ्कोचकलालोपे निर्विकल्पं हि पूजनम् ॥ ६ ॥

पश्चाकाशस्वरूपस्य स्वचक्रस्यानुरूपतः ।
योन्यादिपञ्चरूपेण पूजनात्मा यतः स्थितः ॥ ७ ॥

तत्र योनिर्महासत्ताविश्रान्तिः सर्वसंविदाम् ।
महायोनिस्वरूपस्य विकायात्मतयोदिता (?) ॥ ८ ॥

प्रमेयभूमिकावर्तशङ्खयोनितयोदिता ।
प्रत्यावृत्तिक्रमाद् भूयः स्वरूपपदरूपिणी ॥ ९ ॥
पद्मयोनितया ख्याता ततोऽपि परमे पदे ।
निजविश्रान्तिमापन्नो दिव्ययोनितयोदिता ॥ १० ॥
इति संक्षेपतस्तत्त्वं पञ्चवाहक्रमस्य यत् ।
तन्निर्विकल्पतारूपसृष्ट्यात्मा पूजनोदयः ॥ ११ ॥
युगनाथप्रसादेन सर्वदास्य स्थितिर्यतः ।
अतस्तदात्मकत्वेन स्थित्यात्मा पूजनक्रमः ॥ १२ ॥
तत्र व्योमेश्वरीरूपं खगेन्द्रात्मतया स्थितम् ।
पञ्चाकाशस्वभावस्य निशावरणतामयम् ॥ १३ ॥
मानमेयमयस्वाङ्गसङ्कोचप्रसरक्षमम् ।
खेचरीभूचरीरूपं कूर्मनाथतयोदितम् ॥ १४ ॥
प्रत्यावृत्त्या प्रमेयस्य महासंहाररूपकृत् ।
संहारभक्षिणीरूपं मेषनाथतयोदितम् ॥ १५ ॥
भावात्ममयरूपत्वात्मच्छन्द इति वस्तुतः ।
रौद्ररौद्रेश्वरीरूपं श्रीमच्छन्दतयोदितम् ॥ १६ ॥
तदित्थं युगनाथानां व्याप्तिसारतया स्थितम् ।
अदृष्टविग्रहाविष्टं व्योमेश्वर्यादिपञ्चकम् ॥ १७ ॥
अविकल्पकविज्ञानस्थैर्येण तदनन्तरम् ।
देवतारूपमासाद्य स्वस्वातन्त्र्यविजृम्भणात् ॥ १८ ॥
मनसः खण्डनोद्युक्ता एकादश मरीचिकाः ।
बुद्ध्याद्या एष संहारः प्रधानः पूजनक्रमः ॥ १९ ॥

सर्गावतारसंहारचक्राणामित्थमिष्यते ।
पूजनात्मस्वरूपाणां क्रमोऽयं निर्विकल्पकः ॥ २० ॥
अत्राधिरूढवृत्तीनां व्युत्थानावसरेऽपि यत् ।
कालग्रासो भवेन्नित्यं नानानुभवभूमिषु ॥ २१ ॥
अतः पूजनरूपोऽयमात्मज्ञानतया स्थितः ।
उपदेशतरोः पुष्पं चिदामोदमनोहरम् ॥ २२ ॥
ततोऽपि सर्ववृत्तीनां कालिग्रासपुरस्सरम् ।
निरावरणविश्रान्तिः सङ्क्रमात्मा प्रवर्तते ॥ २३ ॥
कथनादेव येषां तद्विश्रान्तिर्जायते परा(म् ?) ।
सृष्टिस्थितिसंहारचक्रापेक्षां न कुर्वते ॥ २४ ॥
वृन्दक्रमानन्तरं तैरनाख्यं चक्रमिष्यते ।
सृष्ट्यादिचक्रात्रितयं तन्मते नैव पूज्यते ॥ २५ ॥
अस्मन्मतेऽपि तदपि परिपूर्णार्थमिष्यते ।
एतत्समारूढिवशात् प्रभावो हि प्रवर्तते ॥ २६ ॥
एतद्विमर्शसम्भूतवीरावल्यादितर्पणात् ।
आसीद्वामनवीर्यस्य यद्विष्णुस्तम्भनादिकम् ॥ २७ ॥
पूजनात् खेचरत्वं हि सिद्धसूत्रेषु गद्यते ।
आत्मज्ञानात् प्रवर्तन्ते यथेच्छमणिमादयः ॥ २८ ॥
कथं न पूजने चैव सङ्क्रामेऽपि स्वभावतः ।
प्रत्येकमस्ति त्रैविध्यमुद्देकाद् भेद इष्यते ॥ २९ ॥
आत्मज्ञानसमुद्यतैरिति निजैर्भावानुभासात्मकैः
संविन्मज्जनसारतामुपगतैः सृष्ट्यादिभिः पूजनैः ।

सम्पूर्णामलसुन्दरामृतमयस्फारासवानन्दिताः
कालग्रासचरूपहाररसिका नन्दन्तु योगिव्रजाः ॥ ३० ॥

इति महानयप्रकाशे सृष्ट्यादिचक्रनिरूपणं नाम
अष्टमोल्लासः ॥

---

अथ नवम उल्लासः ।

यत्सर्गस्थितिसंहृतिक्रममयैश्चक्रैरुपाकल्पितं
(न) स्वसाच्च्यवते मनागपि पदाद्विभ्रान्तिलाभात्मिकात् ।
आविश्याथ तदक्रमक्रमकलोत्तीर्णप्रथं साम्प्रतं
तत् सङ्क्राममनाख्यचक्रमुचितैर्युक्तिक्रमैर्दश्यते ॥ १ ॥

इत्थं गुर्वात्मदेवानां कथनादिकमात्मना ।
लोलीभावस्थितं नित्यं सर्वानुभवभूमिषु ॥ २ ॥

अमे(दो ? दे)ऽपि किलोद्रेकादेतेषां भेद इष्यते ।
तमाश्रित्यानुरूपेण प्रमेयं प्रतिपाद्यते ॥ ३ ॥

प्रायो हि मैथुने मद्ये मांसे च परिदृश्यते ।
आसक्तिः सर्वजन्तूनां विशेषात् कस्यचित् क्वचित् ॥ ४ ॥

यदि तत्त्यागसंरम्भः पूर्वं तेषां विधीयते ।
उपदेशो न स मनागपि चित्ते प्ररोहति ॥ ५ ॥

जन्मान्तरशताभ्यस्ता विषयेषु मतिर्नृणाम् ।
जरद्गौरिव सस्येभ्यः सा हि दुःखेन वार्यते ॥ ६ ॥

इति संवादतस्तेषां परित्यागो हि दुष्करः ।
अभ्यसूयन्ति ते यस्मादुपदेशकराय च ॥ ७ ॥

यथास्थितोपभोगात्मपूर्वं यच्चूपदिश्यते ।
तत्राधिरूढिर्लोकस्य श्रद्धापूर्वं प्रजायते ॥ ८ ॥
प्रथैकरूपाभावाच्च निर्दिश्यन्ते ततः कथम् ।
प्रथाया भावपर्यन्तं रूपं तद् भिद्यते कथम् ॥ ९ ॥
भेदश्चेद् कल्प्यते तर्हि कल्पनेयं न सत्यभूः ।
स्फुरणादेव वै तेषां गालनं नापि तात्त्विकम् ॥ १० ॥
तच्च कल्पैरसङ्ख्येयैर्बहुदुष्करचर्यया ।
नचास्ति स्फुर(णा)भावो ह्यन्यस्यानुपलम्भतः ॥ ११ ॥
अभावमात्रं नास्त्येव स्याच्चेत् तद् भाति सर्वदा ।
तस्मात् तत्त्वमतत्त्वं वा न भावेन विना भवेत् ॥ १२ ॥
स्वसाम्राज्यवशाद् भानं सतत्त्वातत्त्वयोः समम् ।
हानोपादानकलनातन्त्रे त्वितथं समर्थना ॥ १३ ॥
यथास्थितस्य तस्यातः स्वरूपमुपपद्यते ।
एतत्परिज्ञानमयी जीवन्मुक्तिर्निगद्यते ॥ १४ ॥
एकं स्वरूपरूपं हि मेयमानप्रमातृतः ।
सर्गावतारसंहारमयैराक्रस्य वर्तते ॥ १५ ॥
स्वस्वरूपानुगुण्येन प्रत्येकं कलनावशात् ।
सृष्टिस्थित्यादिभिर्भेदैश्चतुर्धा अपि ताः स्थिताः ॥ १६ ॥
कालग्रासान्तमुदयाच्चतुर्धा विहितो हि यः ।
तस्य विश्रान्तिरेकैव ततो दे(व्यात्र ? व्यस्त्र)योदश ॥
अ(न्या ? ना)ख्यचक्रप्राधान्यात् पूजनीयतया स्थिताः ।
तासामन्त्या स्वविश्रान्तिर्महाविलयभूः परा ॥ १८ ॥

सर्गावतारसंहाराः क्रमात्मानो व्यवस्थिताः।
अनाद्यमक्रममपि क्रमात्मैव तदाश्रयात् ॥ १९ ॥
अक्रमात्मपरामर्शात् क्रमारूषणरूपिणः ।
कालस्य सहसा ग्रा(स)मङ्क्मादित्थमिष्यते ॥ २० ॥
यस्मिन् यस्मिन् हि विषये संक्रामन्ति मरीचयः ।
तत्र तत्र ह्यनायासादनाख्यस्फुरणं स्थितम ॥ २१ ॥
उद्योगेनावभासश्चेत कथं सत्करय सम्भवे ।
अचर्वितोऽवभासः स्यात् तदमृष्टतया कथम् ॥ २२ ॥
तत् सर्गस्थितिसंहाररूपे यो यः क्रमः स्थितः ।
तत्र तत्राक्रमत्वेन अनाख्यं प्रथमं स्थितम ॥ २३ ॥
अत्रान्तरेऽपि विश्रान्तिः क्रमाक्रमपदोज्झिता ।
कालोपाधेरनाक्रम्य नान्तरीयतया स्थिता ॥ २४ ॥
नो चेद् भावान्तरे संवित् प्रसरेत् कथमन्यथा ।
तद्रूपमात्रावष्टम्भात् परिच्छिन्नात्मरूपतः ॥ २५ ॥
नीले तावत् स्थितं भानं भानं च (ति?कि)ल चर्वणे ।
अक्रमेण स्थितं नो चेन्नीलसंविन्न सिध्यति ॥ २६ ॥
आदौ नीलं ततो भानं ततश्च यदि चर्वणम् ।
अन्योन्यपरिहारेण नीलसंविन्न तद् भवेत् ॥ २७ ॥
कालक्रमात्मा कथितः क्रमश्चान्योन्यवर्जनात् ।
नैवं काचित् प्रतीतिः स्याद्विविधांशाभभेदतः ॥ २८ ॥
तन्निरंशवि(दं?र्श) भोगमयानाख्यानुभावतः ।
सर्वानुभवसंसिद्धौ लोकयात्रा प्रतिष्ठिता ॥ २९ ॥

आमुखाद्-भासमानश्च क्रमो योऽयं व्यवस्थितः।
यथानुभवमेतस्य भेदोऽनाख्य-स्फुटं स्थितम्॥ ३०॥
तत्र मेयस्वरूपस्य चतुर्धा भेदसम्भव।
आभावकलितोल्लासस्ततसम्भोगस्ततः परम्॥ ३१॥
ततोऽपि चर्वणं तत्र विरामस्तदनन्तरम्।
एवं मानस्वरूपेऽपि चतुर्धा भेदसम्भवः॥ ३२॥
स्वौचित्येन परिज्ञेयो मातृरूपे तथैव च।
अत्र सर्वत्र विश्रान्तिरेकैव निरुपाधिका॥ ३३॥
आसां द्वादशदेवीनां परामर्शवलात् स्फुटम्।
विकल्पवासनाशून्यं निर्विकल्पं प्रवर्तते॥ ३४॥
ये तु योषिद्व्यसनिनस्तन्मुखेनैव ते क्रमात्।
कालग्रासपदे सम्यक् प्रविशन्ति निराश्रये॥ ३५॥
केचिद् दर्शनमात्रेण तथाङ्गस्पर्शनात परं।
द्वीन्द्रियोत्पचितश्चान्ये विश्राम्यन्ति निराश्रये॥ ३६॥
इत्थं योषिद्व्यसनिना तिस्रोऽनुभवभूमिका।
दृश्यन्ते कालविलये विश्रान्तिर्निरुपाधिका॥ ३७॥
स(त्रि ? ष्ट्य)सृष्ट्यादिभेदेन चतस्रोऽनाख्यदेव्यः।
प्रमेयभूमिमाश्रित्य कालग्रासपराः स्थिताः॥ ३८॥
क्षेपार्थस्य कलेर्धातोरन्वर्थानुगमात् स्फुटम्।
कालीशब्दश्चवसूणां देवीनां वाचकः स्थितः॥ ३९॥
क्षेपो बहिर्मुखेच्छात्मयोषित्सम्भोगजन्मनि।
प्रवृत्ते(ता ? त्ता)स्तम्भाद्विवशात् कालमयः स्थितः॥ ४०॥

एवं मद्यव्यसनिनो ये केचिज्जन्तवः स्थिताः ।
तेषां तदाश्रयेणैव कालग्रासोऽभिधीयते ॥ ४१ ॥
तस्यापि दर्शनस्पर्शपानयोगव(ता ? तः) स्फुटम ।
उद्रेकात् कर्षतो दृष्टः कालग्रासस्य सम्भवः ॥ ४२ ॥
प्रविष्टेऽन्तः शीधु(मं ? से) नेत्रनिर्हरणात्मके ।
स्थैर्यमेति चमत्कारो विना विषयसङ्गतिम ॥ ४३ ॥
प्रतिबिम्बमहाभोगमध्यभूमिविकासनः ।
प्रमाणभूमिमाश्रित्य चतस्रः कालिकाः स्थिताः ॥ ४४ ॥
शब्दसङ्ख्यानवृत्तेश्च कलेर्धातोः किलार्थतः ।
स्थितिसृष्ट्यादिभेदेन चतुर्धा कालिकोदयः ॥ ४५ ॥
एवं मांसव्यसनिनामन्तरास्वादभूमिनाम् ।
प्रमातृरूपमाविश्य चतस्रः कालिकाः स्थिताः ॥ ४६ ॥
गतार्थस्य कलेर्धातोरर्थस्यानुगमादिमाः ।
दर्शनस्पर्शसम्भोगविरामोद्रेकता मताः ॥ ४७ ॥
संहारसृष्ट्यादिमयश्चतुर्धायं क्रमः स्थितः ।
स्त्रीमद्यमांसभोगेषु चमत्कारानुवृत्तितः ॥ ४८ ॥
कालग्रासो व्यसनिनां कश्चित्कालं स्फुट स्थित(म ? ः) ।
एतत्परिकरस्त्वन्यो भाववर्गो व्यवस्थितः ॥ ४९ ॥
युक्त्यानयैव तत्रापि कालग्राममयी स्थितिः ।
अनेनैवाशयेनैव परब्रह्मोपलब्धये ॥ ५० ॥
ललनामधुमांसानि पूज्याग्राणि विशेषतः ।
तदित्थं सर्वभावानां सर्वानुभवभूमिषु ॥ ५१ ॥

महार्थदृष्ट्या सुगमः कालग्रासोऽप्ययत्नतः ।
ग्रस्य(ग ? स्व)स्तुविस्तारेण भावना(स ? मा)स्वभावतः ॥
लब्धबोधो(द)यानन्दं वन्दे संस्थानमात्मनः ।
इति सिद्धमुखाम्नाययुक्त्या नैवास्ति वस्तुतः ॥ ५३ ॥
वस्तुस्वभावो यत्रायं कालः स्यात् कलनात्मकः ।
स्वविस्फारमयं सर्वमिदं संस्थानमात्मनः ॥ ५४ ॥
इति बोधोदयानन्दात् कः कालो ग्रस्यते हि यः।
तद्ग्राससंरम्भपरा याश्च द्वादश कालिकाः ॥ ५५ ॥
इत्थं विचार्यमाणानां न किञ्चिदिति निश्चयात् ।
एकैव चिदचिद्योगभोगनिर्भोगलक्षणा ॥ ५६ ॥
विश्रान्तिः परमा देवी कालोपाधिविवर्जिता ।
सविकल्पाविकल्पानां सर्वासां संविदालयः ॥ ५७ ॥
क्रमात् क्रमपदोत्तीर्णा तदाभोगात्मिकापि या ।
अचला स्पन्दरहिता सर्वस्पन्दोपभोगिनी ॥ ५८ ॥
अलक्ष्यभूता सर्वस्याप्ययापि विविधैर्मुखैः ।
तथा पूजनसङ्क्रामैरुपायैरुपलक्षिता ॥ ५९ ॥
आसां द्वादशदेवीनां स्वरूपविलयावनिः ।
त्रयोदशीति या देवी कथ्यते ह्युपचारतः ॥ ६० ॥
उपादेयतया सैव परोपास्यतया स्थिता ।
त्रयोदशानां देवीनां स्वौचित्यार्थानुसारतः ।
अभिधाना(त्रि ? नि) वर्तन्ते हृदयङ्गमयुक्तितः ॥ ६१ ॥
एतासामभिधानेन या मन्त्राक्षरमालिकाः ।
कालिकाक्रमदृष्टत्वादुपचारेण ताः स्थिताः ॥ ६२ ॥

मेलावदर्शने ह्यत्र प्रत्यक्षज्ञानगोचरे ।
कथं मन्त्रस्य सद्भावः स प्रत्यक्षोऽपि वा कथम् ॥ ६३ ॥

अवर्णराजप्रत्यक्षः कायानुभवभूमिकः ।
पञ्चपिण्डात्मकोऽपि स्यात् सूक्ष्मप्रत्यक्षदर्शिनः ॥ ६४ ॥

नान्यानि मन्त्रवर्णानि प्रत्यक्षानीव सर्वथा ।
उपचारेण तद्वृत्तिकालिका क्रमगोचरा ॥ ६५ ॥

तत्तद्विकल्पसम्भूतवासनावेधसंक्षयात् ।
सर्वाकाङ्क्षाविरहिता विश्रान्तिर्जायते परा ॥ ६६ ॥

इत्थमुत्थानविषये भावानुभवभूमिषु ।
प्रत्यक्षः सर्वजन्तूनां स्थितो(ऽसौ) पूजनक्रमः ॥ ६७ ॥

अन्यैरावरकत्वेन ये भावाः परिवर्जिताः ।
तैरेव ज्ञानिनामित्थं जाज्वलीति परा चितिः ॥ ६८ ॥

एतदर्थानुसारेण स्तोत्रभट्टारके मया ।
स्फुटं ये विवृताः श्लोकास्तत +++++++* ॥ ६९३ ॥

---

शुभं भूयात् ॥

---

* इमानेवाशो मातृकायामुपलभ्यते

# LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | Rs. | As. | P. |
|---|---|---|---|
| भक्तिमञ्जरी **Bhaktimanjari** (Stuti) by H. H. Svāti Śrī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः **Syanandurapuravarnana-prabandha** (Kāvya) by H. H. Svāti Śrī Rāma Varma Mahārāja, with the commentary Sundarī of Rājarāja Varma Koil Tampuran. | 2 | 0 | 0 |

---

## Trivandrum Sanskrit Series.

| | Rs. | As. | P. |
|---|---|---|---|
| No. 1—दैवम् **Daiva** (Vyākarana) by Deva with Purusakāra of Krsnalīlāsukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2—अभि[illegible] Abhi- [illegible] | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः **Nalabhyudaya** (Kāvya) by Vāmana Bhatta Bāna (*second edition*). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः **Sivalilarnava** (Kāvya) by Nīlakantha Dīksita (*out of stock*). | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः **Vyaktiviveka** (Alankāra) by Mahima-Bhatta with commentary (*out of stock*). | 2 | 1[illegible] | 0 |
| No. 6—दुर्घटवृत्तिः **Durghatavrtti** (Vyākarana) by Śaranadeva (*out of stock*) | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका **Brahmatattvaprakasika** (Vedānta) by Sadāsivendrasarasvatī (*out of stock*). | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् **Pradyumnabhyudaya** (Nātaka) by Ravi Varma Bhūpa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 9—विरूपाक्षपञ्चाशिका **Virupaksapancasika** (Vedānta) by Virūpākṣanātha with the commentary of Vidyācakravartin (*out of stock*). | 0 | 8 | 0 |
| No. 10—मातङ्गलीला **Matangalila** (Gajalakṣaṇa) by Nīlakaṇṭha (*out of stock*). | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् **Tapatisamvarana** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 4 | 0 |
| No. 12—परमार्थसारम् **Paramarthasara** (Vedānta), by Ādiśeṣa with the commentary of Rāghavānanda (*out of stock*). | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् **Subhadradhananjaya** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 0 | 0 |
| No. 14—नीतिसारः **Nitisara** (Nīti) by Kāmandaka, with the commentary of Śankarārya (*out of stock*). | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् **Svapnavasavadatta** (Nāṭaka) by Bhāsa (*second edition*) | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् **Pratijnayaugandharayana** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् **Pancaratra** (Nāṭaka) by Bhasa (*out of stock*). | 1 | 0 | 0 |
| No. 18—नारायणीयम् **Narayaniya** (Stuti) by Nārāyaṇa Bhaṭṭa with the commentary of Deśamangalavārya (*second edition*). | 4 | 0 | 0 |
| No. 19—मानमेयोद [illegible] by [illegible] | 1 | 4 | 0 |
| No 20—अविमारकम् **Avimaraka** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 21—बालचरितम् **Balacarita** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |

Rs. As. P

No 22—मध्यमव्यायोग-दूतवाक्य दूतघटोत्कच-कर्णभारोरुभङ्गानि **Madhyamavyayoga-Dutavakya-Dutaghatotkaca-Karnabhara and Urubhanga** (Naṭaka) by Bhasa (*out of stock*) 1 8 0

No 23—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas) (*out of stock*) 1 12 0

No 24—जानकीपरिणय. **Janakiparinaya** (Kāvya) by Cakra Kavi (*out of stock*) 1 0 0

No 25—[illegible] 0 12 0

No 26—अभिषेकनाटकम् **Abhisekanataka** by Bhasa (*out of stock*) 0 12 0

No 27—कुमारसम्भव. **Kumarasambhava** (Kāvya) by Kalidasa with the two commentaries, Prakāśika of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part I, 1st and 2nd Sargas) (*out of stock*). 1 12 0

No 28—वैखानसधर्मप्रश्न **Vaikhanasadharmaprasna** (Dharmasūtra) by Vikhanas (*out of stock*) 0 8 0

No 29—नानार्थार्णवसंक्षेप **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*) 2 4 0

No 30—वास्तुविद्या **Vastuvidya** (Śilpa) (*out of stock*) 0 12 0

No 31—नानार्थार्णवसंक्षेप **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas) 1 0 0

No 32—कुमारसम्भव **Kumarasambhava** (Kāvya) by Kalidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part II, 3rd, 4th and 5th Sargas) (*out of stock*). 2 8 0

| | RS. | AS. | P. |
|---|---|---|---|
| No 33—वाररुचसंग्रह **Vararucasangraha** (Vyakarana) with the commentary Dīpaprabhā of Nārāyaṇa (*out of stock*) | 0 | 8 | 0 |
| No 34—मणिदर्पण **Manidarpana** (Nyāya) by Rajacūdamaṇimakhin | 1 | 4 | 0 |
| No 35—मणिसार **Manisara** (Nyāya) by Gopīnātha | 1 | 8 | 0 |
| No 36—कुमारसम्भव **Kumarasambhava** (Kāvya) by Kalidasa with the two commentaries, Prakāśika of Arunagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part III, 6th, 7th and 8th Sargas) | 3 | 0 | 0 |
| No 37—आशौचाष्टकम् **Asaucastaka** (Smṛti) by Vararuci with commentary | 0 | 4 | 0 |
| No 38—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tīkasarvasva of Vandyaghatīya Sarvānanda (Part I, 1st Kāṇḍa) | 2 | 0 | 0 |
| No 39—चारुदत्तम् **Carudatta** (Nataka) by Bhāsa (*out of stock*) | 0 | 12 | 0 |
| No 40—अलङ्कारसूत्रम् **Alankarasutra** by Rajānaka Ruyyaka with the Alaṅkārasarvasva of Mankhuka and its commentary by Samudrabandha (*second edition*) | 2 | 8 | 0 |
| No 41—अध्यात्मपटलम् **Adhyatmapatala** (Vedānta) by Āpastamba with Vivaraṇa of Śrī Sankara Bhagavat Pāda (*out of stock*) | 0 | 4 | 0 |
| No 42—प्रतिमानाटकम् **Pratimanataka** by Bhāsa (*out of stock*) | 1 | 8 | 0 |
| No 43—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakosodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghatīya Sarvānanda (Part II, 2nd Kāṇḍa, 1-6 vargas) | 2 | 8 | 0 |
| No. 44—तन्त्रशुद्धम् **Tantrasuddha** by Bhaṭṭāraka Vedottama (*out of stock*) | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 45—प्रपञ्चहृदयम् Prapancahrdaya. | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः Paribhasavrtti (Vyākarana) by Nīlakantha Dīksita. | 0 | 8 | 0 |
| No 47—सिद्धान्तसिद्धाञ्जनम् Siddhantasiddhanjana (Vedānta) by Krsnānanda Sarasvatī (Part I.) | 1 | 12 | 0 |
| No. 48—सिद्धान्तसिद्धाञ्जनम् Do. Do. (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका Goladipika (Jyotisa) by Parameśvara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः Rasarnavasudhakara (Alaṅkāra) by Singa Bhūpāla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् Namalinganusasana (Kośa) by Amarasimha with the two commentaries, Amarakośodghatana of Ksīrasvāmin and Tīkāsarvasva of Vandyaghatīya Sarvānanda (Part III, 2nd Kanda, 7-10 vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् Namalinganusasana (Kośa) by Amarasimha with the commentary Tīkāsarvasva of Vandyaghatiya Sarvānanda (Part IV, 3rd Kānda). | 1 | 8 | 0 |
| No. 53—शब्दनिर्णयः Sabdanirnaya (Vedānta) by Prakāśātmayatīndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः Sphotasiddhinyayavicara (Vyākarana). | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् Mattavilasaprahasana (Nātaka) by Mahendravikramavarman. (*out of stock*). | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका Manusyalayacandrika (Śilpa) (*out of stock*). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् Raghuviracarita (Kāvya). | 1 | 4 | 0 |
| No 58—सिद्धान्तसिद्धाञ्जनम् Siddhantasiddhanjana (Vedānta) by Krsnānanda Sarasvatī (Part III). | 2 | 0 | 0 |

| | RS. | AS | P. |
|---|---|---|---|
| No 59—नागानन्दम् **Nagananda** (Nāṭaka) by Harṣadeva with the commentary Vimarśinī of Śivarāma (*out of stock*). | 3 | 4 | 0 |
| No 60—लघुस्तुति **Laghustuti** by Laghubhaṭṭāraka with the commentary of Rāghavānanda. | 0 | 8 | 0 |
| No 61—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedānta) by Kṛṣṇānanda Sarasvatī (Part IV) | 1 | 4 | 0 |
| No 62—सर्वमतसंग्रह **Sarvamatasangraha.** (*out of stock*) | 0 | 8 | 0 |
| No 63—किरातार्जुनीयम् **Kiratarjuniya** (Kāvya) by Bhāravi with the commentary Śabdarthadīpika of Citrabhānu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No 64—मेघसन्देश **Meghasandesa** by Kālidāsa with the commentary Pradīpa of Dakṣiṇāvartanātha | 0 | 12 | 0 |
| No 65—मयमतम् **Mayamata** (Śilpa) by Mayamuni (*out of stock*) | 3 | 4 | 0 |
| No 66—महार्थमञ्जरी **Mahabarthamanjari** (Darśana) with the commentary Parimala of Maheśvarānanda | 9 | 4 | 0 |
| No 67—तन्त्रसमुच्चय **Tantrasamuccaya** (Tantra) by Nārāyaṇa with the commentary Vimarśinī of Śaṅkara (Part I, 1–6 Paṭalās) (*out of stock*) | 3 | 4 | 0 |
| No 68—तत्त्वप्रकाश **Tattvaprakasa** (Āgama) by Śrī Bhojadeva with the commentary Tātparyadīpikā of Śrī Kumāra | 1 | 12 | 0 |
| No. 69 ईशानशिवगुरुदेवपद्धति **Isanasivagurudevapaddhati**(Tantra)by Īśānaśiva gurudevamiśra Part I, Sāmānya pāda) | 1 | 8 | 0 |
| No 70—आर्यमञ्जुश्रीमूलकल्प **Aryamanjusrimula kalpa** (Part I). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 71—[illegible] Paṭalas) (*out of stock*). | 3 | 8 | 0 |
| No. 72—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part II, Mantrapāda). | 4 | 0 | 0 |
| No. 73—ईश्वरप्रतिपत्तिप्रकाशः **Isvarapratipattiprakasa** (Vedānta) by Madhusūdanasarasvatī. | 0 | 4 | 0 |
| No. 74—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bālakrīḍā of Viśvarūpâcārya (Part I — Ācāra and Vyavahāra Adhyāyās). | 3 | 4 | 0 |
| No. 75—शिल्परत्नम् **Silparatna** (Śilpa) by Śrīkumāra (Part I). | 2 | 12 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part II). | 3 | 0 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part III, Kriyāpāda 1—30 Paṭalās). | 3 | 0 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् **Asvalayanagrhyasutra** with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part I, 1 & 2 Adhikaraṇās). | 3 | 12 | 0 |
| No. 80—अर्थशास्त्रम् **Do.** Do. (Part II, 3—7 Adhikaraṇās). | 4 | 0 | 0 |
| No. 81—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bālakrīḍa of Viśvarūpācārya (Part II. Prāyaścittādhyāya). | 2 | 0 | 0 |
| No. 82—अर्थशास्त्रम् **Arthasastra of Kauṭalya** with commentary by Mahāmahopādhyāya T. Gaṇapati Śastri (Part III, 8—15 Adhikaraṇās). | 3 | 4 | 0 |

| | Rs | As | P |
|---|---|---|---|
| No 83—ईशानशिवगुरुदेवपद्धति Isanasivagurudevapaddhati (Tantra) by Isana Sivagurudevamisra (Part IV, Kriyapada 31–64 Patalas and Yogapada) | 3 | 8 | 0 |
| No 84—आर्यमञ्जुश्रीमूलकल्प Aryamanjusrimulakalpa (Part III) | 2 | 0 | 0 |
| No 85—विष्णुसंहिता Visnusamhita (Tantra) | 2 | 8 | 0 |
| No 86—भरतचरितम् Bharatacarita (Kavya) by Krsnakavi | 1 | 8 | 0 |
| No 87—सङ्गीतसमयसार Sangitasamayasara (Sangita) of Sangitakara Parsvadeva | 1 | 2 | 0 |
| No 88—काव्यप्रकाश Kavyaprakasa (Alankara) of Mammatabhatta with the two commentaries the Sampradayaprakasini of Sri Vidyacakravartin and the Sahityacudamani of Bhattagopala (Part I 1–5 Ullasas) | 3 | 0 | 0 |
| No 89—स्फोटसिद्धि Sphotasiddhi (Vyakarana) by Bharatamisra | 0 | 8 | |
| No 90—मीमांसाश्लोकवार्त्तिकम् Mimamsaslokavartika with the commentary Kasika of Sucaritamisra (Part I) | 2 | 8 | 0 |
| No 91—होराशास्त्रम् Horasastra of Varahamihiracarya with the Vivarana of Rudra | 3 | 0 | 0 |
| No 92—रसोपनिषत् Rasopanisat | 2 | 0 | 0 |
| No 93—वेदान्तपरिभाषा Vedantaparibhasa (Vedanta) of Dharmarajadhvarindra with the commentary Prakasika of Peddadiksita | 1 | 8 | 0 |
| No 94—बृहद्देशी Brihaddesi (Sangita) of Matangamuni | 1 | 8 | 0 |
| No 95—रणदीपिका Ranadipika (Jyotisa) of Kumaraganaka | 0 | 1 | 0 |

| | Rs. | As. | P |
|---|---|---|---|
| No 96—ऋक्संहिता Rksamhita with the Bhāsya of Skandasvāmin and the commentary of Venkatamadhavarya (Part I, 1st Adhyāya in 1st Astaka) | 1 | 8 | 0 |
| No. 97—नारदीयमनुसंहिता Naradiyamanusamhita (Smrti) with Bhāsya of Bhavasvāmin | 2 | 0 | 0 |
| No 98—शिल्परत्नम् Silparatna (Śilpa) by Śrī Kumāra (Part II) | 2 | 8 | 0 |
| No 99—मीमांसाश्लोकवार्तिकम् Mimamsasloka-vartika (Mīmāmsā) with the commentary Kasika of Sucaritamiśra (Part II) | 2 | 0 | 0 |
| No 100—काव्यप्रकाश Kavyaprakasa (Alankāra) of Mammatabhatta with the two commentaries, Sampradāyaprakāśinī of Śrīvidyācakravartin and Sāhitya cudāmani of Bhattagopāla (Part II, 6–10 Ullāsas). | 5 | 0 | 0 |
| No 101—आर्यभटीयम् Aryabhatiya (Jyotisa) of Āryabhatācārya with the Bhāsya of Nīlakanthasomasutvan (Part I Ganitapāda) | 2 | 8 | 0 |
| No. 102—दत्तिलम् Dattila (Sangīta) of Dattila-muni. | 0 | 4 | 0 |
| No. 103—हंससन्देश Hamsasandesa (Vedānta) with commentary | 0 | 8 | 0 |
| No. 104—साम्बपञ्चाशिका Sambapancasika (Stuti) with commentary. | 1 | 0 | 0 |
| No 105—सिद्धिप्रदीप Nidhipradipa of Siddha śrikanthaśambhu | 0 | 4 | 0 |
| No 106—प्रक्रियासर्वस्वम् Prakriyasarvasva (Vyakarana) of Śrī Nārāyana Bhatta with commentary (Part I) | 1 | 0 | 0 |

| | RS | AS. | P. |
|---|---|---|---|
| No. 107—काव्यरत्नम् Kavyaratna (Kavya) of Arhaddasa | 0 | 12 | 0 |
| No. 108—बालमार्तण्डविजयम् Balamartandavijaya (Nataka) of Devarajakavi. | 1 | 8 | 0 |
| No. 109—न्यायसारः Nyayasara with the commentary of Vāsudevasūri. | 1 | 8 | 0 |
| No. 110—आर्यभटीयम् Aryabhatiya (Jyotiṣā) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭha-somasutvan (Part II. Kālakriyāpāda) | 1 | 0 | 0 |
| No. 111—हृदयप्रियः Hridayapriya (Vaidyaka) by Parameśvara. | 3 | 0 | 0 |
| No. 112—कुचेलोपाख्यानम् अजामिलोपाख्यानं च । Kucelopakhyana and Ajamilopakhyana (Saṅgīta) by H. H. Svāti Śrī Rāma Varma Mahārāja | 0 | 4 | 0 |
| No. 113—सङ्गीतकृतयः Sangitakrtis (Gana) of H. H. Svāti Śrī Rāma Varma Mahārāja | 1 | 0 | 0 |
| No. 114—साहित्यमीमांसा Sahityamimamsa (Alaṅkāra) | 1 | 0 | 0 |
| No. 115—ऋक्संहिता Rksamhita (with the Bhāṣya of Skandasvamin and the commentary of Veṅkaṭamādhavārya) (Part II 2nd Adhyāya in Ist Aṣṭaka) | 1 | 8 | 0 |
| No. 116—वाक्यपदीयम् Vakyapadiya (Vyākarana) with the commentary Prakīrnakaprakāśa by Helārāja son of Bhutirāja. (Part I). | 1 | 3 | 0 |
| No. 117—सरस्वतीकण्ठाभरणम् Sarasvatikantabharana (Vyākarana) by Bhojadeva with the commentary of Śrī Nārāyaṇa Daṇḍanātha. | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 118—बालरामभरतम् **Balaramabharata** (Nāṭya) by Bālarāma Varma Vanci Mahāraja. | 2 | 8 | 0 |
| No 119—विवेकमार्तण्डः **Vivekamarthanda** (Vedānta) of Viśvarūpadeva | 0 | 8 | 0 |
| No 120—शौनकीयम् **Saunakiya.** | 0 | 8 | 0 |
| No 121—वैखानसागमः **Vaikhanasagama** (Tantra) of Marīci. | 2 | 0 | 0 |
| No. 122—प्रबोधचन्द्रोदयम् **Prabodhacandrodaya** (Nāṭaka) by Kṛṣṇamiśrayati with the commentary Nāṭakābharaṇa of Śrī Govindāmṛta-bhagavān. | 2 | 0 | 0 |
| No 123—सङ्ग्रामविजयोदयः **Sangramavijayodaya** (Jyotiṣa). | 2 | 0 | 0 |
| No. 124—हरमेखला **Haramekhala** of Mahuka with commentary (Part I chapters 2, 3 & 4) | 1 | 8 | 0 |
| No. 125—कोकसन्देशः **Kokasandesa** (Kāvya) by Viṣṇutrāta. | 0 | 8 | 0 |
| No. 126—करणपद्धति. **Karanapaddhati** (Jyotiṣa). | 0 | 4 | 0 |
| No. 127—सरस्वतीकण्ठाभरणम् **Sarasvatikantha-bharana** by Bhojadeva with the commentary of Srī Nārāyaṇa Daṇḍanātha. | 1 | 8 | 0 |
| No. 128—भृङ्गसन्देशः **Bhringasandesa** (Kāvya) by Vāsudeva. | 0 | 6 | 0 |
| No. 129—हंससन्देशः **Hamsasandesa** (Kāvya) | 0 | 4 | 0 |
| No 130—महानयप्रकाशः **Mahanayaprakasa.** | 0 | 8 | 0 |

***Apply to:—***

*The Superintendent,*
*Government Press,*
*Trivandrum.*